1,212 çlokas. Character, Bengali. Date, ? Place of deposit, Çrínagara, Dháká, Babu Kálinátha Basu. Appearance, new. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय ।

मूर्द्धि धत्ते विधुं यो हि वलयाकार......... ।
नमस्तस्मै ममाभीष्टदायिनेऽभीष्टसिद्धये ॥
शिवं प्रणम्य मन्यास्ये बालकज्ञानहेतवे ।
वक्ष्ये कलापसाराख्यं न्यायभूषणसंज्ञकः ॥
अकारादि क्षकारान्ता वर्णमाला प्रकीर्त्तिता ।
तत्रादौ चतुर्द्दश स्वराः । अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ ।
दश ... ... । अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ सजातीयौ... ...
सवर्णौ । अ आ इ ई इत्यादि । अ इ उ ऋ ऌ ... ... ... ... ।
इद्यादिस्वरः ... ... ॥ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ । ए ऐ
ओ औ सन्ध्यक्षरं । कादिक्षान्तं व्यञ्जनं । पञ्चशः पञ्चवर्गाः । कादिमान्तं ।
वर्गप्रथमद्वितीयशषसां अघोषाः । क ख च छ इत्यादि । अघोषान्ये घोषाः ।
ग घ ङ इत्यादि । ङ ञ ण न मा अनुनासिकाः । य र ल वा अन्तस्थाः ।
श ष स षाः शिट् । विभक्त्यन्तं पदं । ते यजन्ते । इति संज्ञापादः । समानः
सवर्णो दीर्घः । दण्डाग्रं सागता दधीदं मधूपमं पितॄणं । अवर्ण इवर्णेन
ए । तवेहा सेयं । अवर्ण उवर्णेन ओ । तवोचनं गङ्गोदकं । अवर्ण ऋ
वर्णेन अर् । तवर्काय । ऋण-प्र-वसन-वत्सतर-कम्बल दश-पर्वतानामृणे
...... ॥ ऋणार्णं इत्यादि । ऋते तृतीयासमासेऽरो दीर्घः । शीतेन ऋतः
शीतार्त्तः । इत्यादि ॥

**End.** अभ्यर्णः सामीप्ये समर्णः न्यर्णः व्यर्णश्च वष्टः वषितः हृष्टः हृषितः पूर्णः
पूरितश्च तूर्णः त्वरितश्च आस्वान्तं आस्वनितं दान्तः दमितः शान्तः शमितः
पूर्णः पूरितः दस्तः दासितः स्पष्टः स्पाशितः छन्नः छादितः ज्ञप्तः ज्ञपितः ।
एते निपाताश्च । उक्ता कृत्प्रत्यया अन्यतोऽन्यत्रापि भवन्ति । वारि चरतीति
वार्चो हंसः गिरौ शेते इति गिरिशः एतौ निपातौ ॥ इति कृत्प्रकरणम् ॥

**Colophon.** ध्यात्वेष्टदेवतां स श्रीरामपूर्व्वः कुमारकः
व्याकरणं मुग्धबोध-सारस्वत-कलापकं ॥
दृष्ट्वा कलापसाराख्यं कुरुते चाशुबोधकम् ।
आज्ञियां ... ... श्रीलमोपीमोचनभूपतेः ॥
आदेशात् पाचरग्रामनिवासी मन्द्यवंशजः ।

सुधीर-श्रीरामगति-वाचस्पति-सुतो नतः ॥
ग्रन्थेऽस्मिन् नाधिकारोऽस्ति न गुर्व्वादिविचारणं ।
सूत्रसन्दर्भभङ्गस्य प्रयोगेणैव जायते ॥
सन्धिविकल्पना सूत्रे विभक्तेश्चैव लुक् क्वचित् ।
अनेकानेकवचनं सूत्रस्यानित्यता क्वचित् ॥
प्रयोगैरनुमातव्या अमी दोषनिदर्शनं ।
निपातनादन्यसिद्धिरिति शास्त्रस्य निर्णयः ॥
कृताञ्जलिरहं याचे विबुधा वः कृपामयाः ।
मत्कृतं ग्रन्थसन्दर्भं शोधितव्यं महद्गुणैः ॥

**विषयः** । मुग्धबोधसारस्वतकलापादिव्याकरणेभ्यः सारमाकृष्य सङ्कलितं कलापसाराख्यं संचिप्तं व्याकरणम् । सन्ति चात्र संज्ञा-सन्धि-सुबन्त-कारक-समास-तद्धित-गणसूत्र-धातु-कृदन्त-प्रकरणानि यथाक्रमं सन्निवेशितानि ॥

---

**No. 45. कविरत्नाकरः** । Substance, country-made paper, 12×4 inches. Folia, 5. Lines, 12 on a page. Extent, 135 çlokas. Character, Bengali. Date, ? Place of deposit, Brámhaṇamaṇḍalígrám, Rámanáráyaṇa Bhaṭṭácáryya. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय । माधवोमाधवौ वाचि माधवोमाधवौ हृदि ।
स्मरन्ति साधवः सर्व्वे सर्व्वकार्य्येषु माधवम् ।

**End.** य एव नाथः स एव पुत्रो य एव योगः स एव बोधः ।
यदेव चेत स्तदेव कर्म्म य एव लोकः स एव धर्म्मः ॥ ० ॥

**Colophon.** इति समाप्तोऽयं ग्रन्थः ।

**विषयः** । नीत्युपदेशमूलककतिपयश्लोकाः ।

---

**No. 46. काण्वशाखिश्राद्धप्रयोगः** । Substance, country-made paper. 13×2½ inches. Folia, 21. Lines, 5 on a page. Extent, 252 çlokas. Character, Bengali. Date, ? Place of deposit, Rájpur, Post Office Sonárpur, Rájendranáráyaṇa Bhaṭṭácáryya. Appearance, old. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय । अथान्त्येष्टिपद्धतिः । गतप्राणं ज्ञात्वा पुत्रादिः स्नात्वा ... कृत्वा स्नापयेत् । ततो गतप्राणं स्नापयित्वा वाससा सर्व्वशरीरमाच्छाद्य शीर्षं कृत्वा भूमौ दक्षिणशिरसं स्थापयेत् ।

**End.** ततः पिण्डं गोऽजविप्रेभ्यो दद्यात् । जले वा क्षिपेत् । तत अद्येत्यादि अमुकगोत्रस्य अमुकदेवशर्म्मणः कृतैतदाद्यैकोद्दिष्टश्राद्धकर्म्माच्छिद्रमस्तु अस्त्विति-प्रतिवचनं । ततो वैश्वदेवबलिकर्म्मणी कुर्य्यात् ॥

**Colophon.** इति यजुर्वेदिकाण्वशाखिनामाद्यैकोद्दिष्टश्राद्धप्रयोगः समाप्तः ॥

**विषयः ।** काण्वशाखिनामन्त्येष्टिपद्धतिः । तथा काण्वशाखिनामाद्यैकोद्दिष्टश्राद्धादिप्रयोगः ।

---

**No. 47.** कातन्त्रकौमुदी, By गङ्गेशशर्म्मा । Substance, country-made paper, $13\frac{1}{2} \times 3$ inches. Folia, 7. Lines, 4 on a page. Extent, 85 çlokas. Character, Bengali. Date, ? Place of deposit, Kṛṣṇapura, Post Office Vaidyerbázár, District Dháká, Paṇḍita Kálikṛṣṇa Vidyávinoda. Appearance, new. Prose and verse. Incorrect.

**Beginning.** ॐ नमो गणेशाय ।

शिवं प्रणम्य सर्व्वेशं सर्व्वज्ञानप्रदायकम् ।

कातन्त्रकौमुदी ह्येषा कृता गङ्गेशशर्म्मणा ॥

जयति पुनरयं तु लुप्ततन्त्रकृतमोक्षहेतुः

श्रुतिपरिगतकीर्त्तिः कश्चन श्रीहितज्ञा ।

प्रथितसुचतुराख्यो ... ... ... ... ...

यथाकृतिः सर्व्ववर्म्मणा ... ... ... ... ॥

न चन्द्रगोमी न च दुर्गसिंहः कात्यायन ... ... न वेद ।

यथाक्रमालोकितसर्व्वशास्त्रः कातन्त्रतन्त्रार्थविनिश्चयार्थः ॥

शर्व्वकृतसूत्रानुसन्देहे विपरीतपदस्य सिद्धिर्ज्ञातव्या । सिद्धो वर्णसमाम्नाय इत्यत्र सिद्धपदस्यात् चतुष्टयमिति संख्यावाचकशब्दस्य बाहुल्यार्थेऽपि द्विवचनं ।

कृत्वा च बहुलं युद्धं प्रविश्य शिविरं पुनः ।

कुरवोऽलस्थितं मन्त्रं सभायाश्चक्रिरे मिथः ॥

अस्यार्थः कुरवो बहुलं युद्धं कृत्वा पुनः शिविरं प्रविश्य मिथो निर्ज्जने सभायां आत्मस्थितं मन्त्रं चक्रिरे । "अवकारयोर्मध्ये" इत्यत्र मध्यपदस्यात् आकारयोरपि मध्ये विसर्गस्योकारः । ... ... ... ... ... ... ... ...

पुत्रोऽत्र मत्कृतं मन्ये पुत्रभार्य्यारथीगढे ।

न पुत्रमेतकृतं मन्ये रामचन्द्रकृते कचित् ।

एश्छतिरन्तामिपरोपीत्यत्र अपि चत्वात् पुनोऽत्तेति पदे रेफं बाधित्वा विसर्गस्योकारः । इत्यादि ॥

**End.** चारिमध्ये स्थितं पद्मं कम्पयेत् केन हेतुना ।

हेतुनेत्यत्र "षष्ठी हेतुप्रयोगे" इति षष्ठ्येव प्राप्नोति । तत्पमुचारत्र नित्य-चत्वादनित्यमपि प्रकरणेऽस्मिन्निति तृतीया । •

अष्टम्यां च गुरोर्जन्मनि शिष्यं हन्ति चतुर्दशी । इत्यत्रापि ।

तत्यानुरत्ना नरकस्य जिष्णवः गुणैर्नृपाः शार्ङ्गिणमन्वयायिषुः ॥

नृपाः ... गुणैः शार्ङ्गिणं कृष्णं अनुगतवन्तः, नृपाः किम्भूताः नरकस्य जिष्णवः "न निष्ठादिषु" इत्यत्र नञोऽनित्यत्वात् नरकस्येति षष्ठी ॥

**Colophon.** इति गङ्गेशशर्मकृता कातन्त्रकौमुदी समाप्ता ॥

**विषयः** । ग्रन्थेऽस्मिन् तत्रभवता गङ्गेशशर्मणा "सैव दाशरथी रामः सैव राजा युधिष्ठिर" इत्याद्यसंस्कृतपदानां कातन्त्रसूत्राण्युद्धृत्य उद्धृतपदविशेषव्यतिक्रमनिर्देशादिभिः समाधानानि कृतानि ॥

---

**No. 48.** कातन्त्रचन्द्रिका, वा कातन्त्रपरिशिष्टचन्द्रिका By रामदास-चक्रवर्त्ती । Substance, country-made paper, $18 \times 1\frac{1}{2}$ inches. Folia, 97 Lines, 11 on a page. Extent, 5,643 çlokas. Character, Bengali. Date, ? Place of deposit, Pañcasáragráma, District Dháká, Paṇḍita Mahendranatha Kávyatírtha. Appearance, old. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय ।

नानाटीकां समालोक्य गोपीनाथवचस्तथा ।

निर्म्मिता यत्नतः पुष्टी मन्दधीभिः सुटस्तनात् ॥

अपादानं । अथ वक्ष्यमाणं सम्प्रदानमपादानसंज्ञं भवति इति कथं न शक्यते वक्तुं । इत्याह संज्ञान्तरमिति । युक्तिः पुनरियम् ॥ अपादानस्या-नन्तरं सम्प्रदानमित्यकरण + + संज्ञान्तरमिति मर्य्यादायामव्ययीभावः ॥ इत्यादि ।

**End.** सुखदुःखं सुखदुःखे अनयोर्नां विरोधित्वात् इति समाहारः । इतरेतरश्च टीकाकृता दर्शितः । अन्यत्र विनियमा स्वामभिधानमव्यवस्था । भाष्येऽप्या-कृतिमयोऽयमित्युक्तं ।

दुर्गटीकां समालोक्य कुलचन्द्रादिसंमतान् ।

रचितन्त्रीयकाराणां जयादित्यस्य संमतिम् ॥

जिनेन्द्रवररुद्राणां शासनस्य च संग्रहात् ।
आदाय धीमतः सम्यक् श्रीरामदासशर्म्मणा ।
कातन्त्रपरिशिष्टस्य निबन्धोऽयं कृतो मया ॥
ज्ञातुं सुखेन ये धीराः कातन्त्रार्थविनिश्चयम् ।
तेषां प्रार्थं मत्प्रणीतटिप्पणीयाचरस्थिता(?) ॥

**Colophon.** इति श्रीरामदासचक्रवर्त्तिकृतौ कातन्त्रपरिशिष्टचन्द्रिकायां समासप्रकरणं समाप्तम् ॥

**विषयः ।** कातन्त्रपरिशिष्टीयकारकसमासप्रकरणयोर्व्याख्यानम् ॥

---

**No. 49.** कातन्त्रपरिशिष्टप्रबोधप्रकाशिका, By शङ्करशर्म्मा Substance, country-made paper, 20×5 inches. Folia, 24. Lines, 10 on a page. Extent, 1,395 çlokas. Character, Bengali. Date, ? Place of deposit, Sáhávázpur, District Tripurá, Paṇḍita Kálinátha Tarkaratna. Appearance, new. Prose. Generally Correct.

**Beginning.** ॐ नमो गणपतये ।
प्रणम्य मातापितरौ श्रिया शङ्करशर्म्मणा ।
गोपीनाथस्य कियती वाक्प्रणाली: प्रकाश्यते ॥
चक्षं गतवति गुणतरणौ ग्रन्थार्थोपदेशभानुना सचिते ।
अकलङ्कप्रबोधचन्द्रिकेयं शमयतु तमः कालापचाराणाम् ॥
केचिद्विकृसमं ज्ञानं शास्त्रं व्याकरणादिकम् ।
तर्कं यन्त्रसमं ज्ञेयं तैरवश्यं रसार्थिभिः ॥
यथा यन्त्रं विनेकूणां न रसः प्रच्युतो भवेत् ।
तथा तर्कं विनाप्येषां नार्थः सधिगतो भवेत् ॥
ग्रन्थारम्भे विघ्नविनाशाय कृतमिष्टदेवतानामोच्चारणरूपमङ्गलमादौ शिष्य-शिक्षार्थमत्रचनाचः शिष्यावबोधाय प्रतिजानीते यो ज्ञात इति । इत्यादि ।

**End.** ( खण्डितम् ) ।

**विषयः ।** गोपीनाथकृतकातन्त्रपरिशिष्टटीकायाः शङ्करकृतव्याख्यानम् ।

---

**No. 50.** कातन्त्रप्रदीपः By विद्यासागरः। Substance, country-made paper, 12×3 inches. Folia, 115. Lines, 6 on a page. Extent, 2,253 çlokas. Character, Bengali. Date, ? Place of deposit, Mayamansiñha Serpur, Paṇḍita Candrakánta Tarkálaṇkár. Appearance, old. Prose. Correct.

**Beginning.** ॐ नमो नारायणाय।
विकसतु नवकुसुमाली
मम हृदि हरिपादपारिजातस्य।
राहुभयादिव विधुना
कायच्युतो विनिर्म्मितो वियति॥
गमयति हितिसुततिमिरं
तिमिरकिशरोद्भवः कोऽपि।
कलयति यत्र कलधो
मधुकरमिथुनाङ्किते कमले॥
धातुः स्वं रूपमिति न्यायादाह भूप्रभृतय इति॥ इत्यादि।

**End.** सामान्यातिदेशे विशेषस्यानतिदेश इति श्रीपतिमोक्तं। चालस्य च विशेषाभावात्। स्थाद्राविन्युक्तत्वादित्याहुः॥

**Colophon.** इति महामहोपाध्यायश्रीकान्तपण्डितात्मजविद्यासागरभट्टाचार्य्यपुण्डरीकाक्षकृते कातन्त्रप्रदीपे चतुष्टयस्य तृतीयपादः समाप्तः॥

**विषयः।** कातन्त्रव्याकरणस्य व्याख्यानम्।

---

**No. 51.** कातन्त्रवृत्तिः By वररुचिः। Substance, Palm leaf, 13×3 inches. Folia, 85. Lines, 9 on a page. Extent, 2,151 çlokas. Character, Bengali. Date, S. K. 1553 ? Place of deposit, District Faridpura, Post Office Pálang, Village Dhánuká, Paṇḍita Jagadbandhu Vidyábhúṣaṇa. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय।
देवदेवं प्रणम्यादौ सर्व्वज्ञं सर्व्वदर्शिनम्।
कातन्त्रस्य प्रवक्ष्यामि व्याख्यानं सार्व्ववर्म्मिकम्॥
कुमारमाराध्य महेश्वरात्मजम्
कलापतन्त्राख्यमिदञ्चकार यः।

अनेकशास्त्रप्रतिबद्धबुद्धये
नमोऽस्तु तस्मै भुवि सर्व्ववर्म्मणे ॥
येन व्याकरणार्णवं ... ... ... लोपागमै र्म्मार्गाकुलं
धातुपाठ-समास नक्रकुटिलं सर्व्वंच ... ... मथत् ।
आलोच्य जगतो हिताय लघुतः श्रीसर्व्ववर्म्मा कविः
सिद्धो वर्ण इतीव सूत्रमकरोत् ज्ञानाय तस्मै नमः ॥
अल्पाक्षरमसन्दिग्धं सारवद्गूढ़निर्णयम् ।
निर्द्दोषं हेतुमत्......सूत्रमित्युच्यते बुधैः ॥
संज्ञा च परिभाषा च विधिर्निर्णय एव च ।
प्रतिषेधोऽधिकारश्च षड्विधं सूत्रलक्षणम् ॥
संज्ञानिमित्तं कर्त्तारं परिमाणं प्रयोजनम् ।
प्रागुक्ता सर्व्वतन्त्राणां पश्चादुक्तानुवर्णयेत् ॥
इदं पुनर्विधिसूत्रं । सिद्धो वर्णसमाम्नायः सिद्धः खलु वर्णानां समाम्नायो वेदितव्यः के पुनस्ते वर्णा अक्षराणि तेषां समाम्नायः ... ... ... सूत्र-सिद्धवचनमन्यथानुपदेशार्थं अक्षरसमाम्नायस्य सर्व्वविशिष्टविदिता ... ... अक्षरानुष्टानेरचिरकाल ...... । सिद्धो वर्णसमाम्नायवचनं सुवादिसंज्ञाविधानार्थं कः पुनरसौ वर्णसमाम्नाय ... ... ... सिद्धकल्पादकारादि हकारपर्य्यन्तं इत्यादि ॥

**End.** न य्वोः पदाद्योर्ऐश्चिरागमः। यकार वकारयोः पदाद्योः समीपस्वरस्य इश्चिर्न भवति तयोश्चादौ इश्चिरागमो भवति स न तद्धिते परतः । व्याकरणं वेत्ति अधीते वा वैयाकरणः ... ... ... ... ... ... ...
... ... द्वारादीनाञ्चेति वक्तव्यं द्वारे नियुक्तः दौवारिकः द्वारपालस्येदं दौवारपालं ... ... ... ... ... ... ... ...
स्वर्गमनमाह सौवर्गमनिकः ग्राम इदं ग्रौवनं ... ... ... ...
स्वागतेन चरति स्वागतिकः सुद्वारेण चरति सुद्वारिकः व्यल्कस्यापत्यं व्याल्किः व्यवहारेण चरति व्यावहारिकः एवमाद्योऽन्ये च द्रष्टव्याः ॥

**Colophon.** इति वररुचिकृतायां ... सव ... कायां यशोमानसबोधितायां कृतौ चतु-ष्टयप्रकरणं समाप्तम् ॥ नाम्नि चतुष्टये षष्ठः पादः समाप्तः । यथादृष्टत्यादि नमो भगवते वासुदेवाय ॐ नमो गोपालाय ।

विषयः । ग्रन्थेऽस्मिन् सर्व्ववर्म्माचार्य्यस्य कृतौ कातन्त्रव्याकरणे वररुचिसंयोजितायां वृत्तौ नाम-कारक-समास-तद्धितप्रकरणात्मकस्य चतुष्टयस्य वृत्तिरस्ति ॥

---

**No. 52.** कातन्त्रवृत्तिचन्द्रिका By हरिरामः । Substance, country-made paper, 13 × 3 inches. Folia, 47. Lines, 6 on a page. Extent, 1,022 çlokas. Character, Bengali. Date, ? Place of deposit, Yaçodala, Mayamansinha, Kálícandra Bhaṭṭácáryya. Appearance new. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय ।

विश्वनाथपदद्वन्द्वं नत्वा गुरुपदं मया ।
भण्यते हरिरामेण व्याख्यासारं समासतः ॥
ग्रन्थारम्भे शिष्टाचारपरिपालनार्थं निखिलविघ्नविघातार्थञ्च शिवनमस्कारं निबध्नाति देवदेवमित्यादि ।

**End.** असम्मते संयुक्तजातीयनामकस्यानेकस्योच्चारणं प्रति भेदो नास्ति इत्यतो योगविभागेन वक्तव्यः ।

**Colophon.** इति कातन्त्रवृत्तिचन्द्रिकायां सन्धौ पञ्चमः पादः समाप्तः ॥

विषयः । कातन्त्रवृत्तेर्व्याख्यानम् । अत्र च सन्धिपादपर्य्यन्तमस्ति ।

---

**No. 53.** कातन्त्रोत्तरपरिशिष्टं, By त्रिलोचनदासः । Substance, country-made paper, 13½ × 5 inches. Folia, 178 (without 1st to 28th). Lines, 6 on a page. Extent, 2025 çlokas. Character, Bengali. Date, ? Place of deposit, Vásáil, Post Office Rasuniá, District Dháká Paṇḍita Abhaya caraṇa Vidyáratna. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ( खण्डित ) हेमन्ताद्वा तलुक् च । अस्मात्शेषेऽण् स्यात् तलुक् च वा । हैमनं हैमन्तं पक्षे हैमन्तिकं ॥ प्रावृष एण्यः । अस्मात् एण्यः स्यात् प्रावृषेण्यो मेघः । प्रावृषेण्यं पयोवाहमिति रघुः ॥ सायं चिरं प्राह्णे प्रगेऽव्ययेभ्यस्तनट् । सायादेः स्वनिपातनात्......एभ्यः कालेभ्यः शेषे तनट् स्यात् । सायन्तनं । सायन्तनीं तिथिप्रण्यः पङ्कजानां दिवातनीमिति भट्टिः । चिरन्तनं प्राह्णेतनं प्रगेतनं अव्ययाद्दिवातनं इदं नक्तन्तनं । पौष्पमेतद्दिवातनमिति भट्टिः । पूर्व्वाह्णापराह्णाभ्यां वा । आभ्यां शेषे तनट् स्याद्वा । पूर्व्वाह्णेतनं पौर्व्वाह्णं अपराह्णेतनं आपराह्णिकं । चिरपरुत्परारिभ्यस्त्नः । एभ्यः शेषे त्नो वा

स्यात् । चिरलं चिरत्नं पचत्नं । नलुक् चेति कश्चित् । पचतनं परा-
रिलं । केचित्परयोर्विभाषां नेच्छन्ति । पुरो नः । पुराशब्दात्परे न स्याद्वा ।
पुराणः पुरातनः । उर्त्तां फलात् । पूर्व्वाः शेषविषयः । इत्यादि ॥

**End.** षो पदान्ते वा दधो रेफः । सप्तम्यां षो पदान्ते दधोर्वा रेफः स्यात् ।
अभिनस्वं अचपास्वं अभिनत्त्वं अंचचत्वं अनानास्वं अनानात्वं । सस्य तः ।
सप्तम्यां धौ पदान्ते धातोः सस्य तो वा स्यात् । अचकास्वं अचकात्वं ।
इयवरलकारेभ्यः सेडाशीरद्यतनीपरोक्षासु धो ढः । एभ्य एषु धो ढो वा
स्यात् । प्रदीपीढ्वं प्रदीपीध्वं । दिदीयिध्वे दिदीयिढ्वे । अचविध्वं अच-
विढ्वं । सेडिति किं तीर्षीध्वं । भूतपूर्व्वेनाप्यन्तान्वयत्वात् नित्यं । मर्जौ
मार्जिरगुणेश्वरे । अस्मिन् मर्जौ मार्जिः स्याद्वा । परिमार्जन्ति परिमृजन्ति ।
ढे ढलोपो न ऋतः । अस्मिन् न ऋतो दीर्घः स्यात् । हच हढः नच नढः ॥

यः क्रूरबुद्धिरिह मन्ति मया कृतेहा
यो वान्यथा लिखति भिन्नमुदाहरेद्वा ।
आचार्य्यपाणिनिमुनिप्रभृतेस्तु तस्य
भाले पतेत् सपदि चण्ड कठोरशापः ॥

**Colophon.** इति सद्वैद्यमाधवदासकवीन्द्रतनयश्रीचिन्तोचनदासकवीन्द्रविरचितायां का-
तन्त्रवृत्त्यावुत्तरपरिशिष्टं समाप्तम् ॥

**विषयः** । श्रीपतिदत्तेन कृतं कातन्त्रव्याकरणस्य परिशिष्टमसम्पूर्णमित्यस्मिन्नुत्तरपरिशिष्टे समास-तद्धित-धातुप्रकरणानि सम्पूर्णानि चिन्तोचनदासेन विहितानि ।

---

**No. 54.** कामाख्यातन्त्रं, By शिवः । Subtance country-made paper, 14×4 inches. Folia, 36. Lines, 6 on a prge. Extent, 480 çlokas. Character, Bengali. Date, ? Place of deposit, Májpáḍá District Dháká, Bábu Rása vihári Ráya. Appearance, tolerable. Verse. Incorrect.

**Begininng.** ॐ नमः परदेवतायै ।
श्रीदेव्युवाच ।
भगवन् सर्व्वधर्म्मज्ञ सर्व्वविद्याप्रिय प्रभो ।
सर्व्वदानन्दहृदय सर्व्वागमप्रकाशक ॥
एतानि सर्व्वतन्त्राणि साधनानि च भूरिशः ।
विद्यायाः सकला देव श्रुतानि प्रसादतः ॥

तारात्तारतमं तन्त्रं किं जानासि वद प्रभो ।
यतीवेदं रहस्यानां तेनाहं नवबोधता ॥

श्रीशङ्कर उवाच ।

शृणु देवि मुदा भद्रे मदीयप्राणवल्लभे ।
योनिरूपा महाविद्या कामाख्या वरवर्णिनि ॥
वरदानन्ददा नित्या महाविभववर्द्धिनी ।
सर्व्वेषां जननी सापि सर्व्वेषां तारिणी मता ॥
रमणी चैव सर्व्वेषां स्थूलसूक्ष्मतमा शुभा ।
तस्यास्तन्त्रं प्रवक्ष्यामि सावधानावधारय ॥
विद्यास्तु सकला देव्या ये ये सिध्यन्ति साधकाः ।
यत्र कुत्रापि केनापि कामाख्या फलदायिनी ॥
कामाख्याविमुखा लोका निन्दिता भुवनत्रये ।
विना कामात्मिकां कापि न दात्री सिद्धिसम्पदाम् ॥ इत्यादि ।

End. कामाख्यायामहापूजा त्रिषु लोकेषु दुर्लभा ।
सत्यं सत्यं महादेवि सत्यमेतद्ब्रवीमि ते ॥
भैरवेण पुरा प्रोक्ता कामाख्या पु+ +ख्यिता ।
पीतपुष्पेण होमेन राज्यं भवति निश्चितम् ॥
रक्तप्रसूनहोमेन वशयेदखिलं जगत् ।
सद्यः प्रलयमायाति सद्यः खेचरतां व्रजेत् ॥

Colophon. इति श्रीकामाख्यातन्त्रे हरपार्व्वतीसंवादे पञ्चदशः पटलः समाप्तः ॥

**विषयः ।** कामाख्याया उपासनेनैव सारूप्यरूपमोक्षप्राप्तिः । तस्या मन्त्रोद्धारादिविधिः । तन्मन्त्रमाहात्म्यादिः । तस्याः पूजाक्रमः । तस्यै जवादिकुसुमदानमाहात्म्यादिकथनम् । पञ्चतत्त्वविधिः । स्वयम्भूकुसुमादिविधिः । शक्तिं विना कलौ पञ्चानुष्ठानदोषकथनम् । योनिपूजादिविधिः । जलाशयनादिविधिः । गुरुतत्त्वादिकथनम् । दिव्यवीरपशुभावनिरूपणम् वैष्णवाचारादिकथनम् । कालिकादिमन्त्रदीक्षितानां वीराचारस्यावश्यकत्वकथनम् । पञ्च शुचिनाशप्रकारकथनम् । पूर्णाभिषेकविधिः । अभिषेकाधिकारिनिरूपणम् । पञ्च मुक्तितत्त्वनिरूपणम् । तत्र सालोक्य-सारूप्य-सायुज्य-निर्व्वाणरूपचतुर्व्विधमुक्तिकथनम् । पञ्च शिवसमसाधनविधिः । कामाख्यारहस्य पूजनविधिः । कामाख्यातीर्थमाहात्म्यादिकीर्त्तनम् । स्वाधीनुर्वैवीरभेदनिरूपणम् । तयोः ध्यानादीनां तुल्यत्वकथनम् ॥ इति शम् ।

---

**No. 55.** कारकचक्रतत्त्वम् । Substance, country-made paper, 17 × 2½ inches. Folia, 8. Lines, 7 on a page. Extent, 343 çlokas. Character, Bengali. Date ? Place of deposit, Viṣṇupura, Kádákuli, District Bánkurá, Rámaprasanna Bhaṭṭácáryya. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।
प्रणम्य कमलाकान्तं वागीशं वाक्पतिं गुरुम् ।
कारकचक्रस्य तत्त्वं तन्यते येन केनचित् ॥
क्रिया मित्येत्यादि षष्ठ्याः कार्य्यत्वमर्थः । तथाच क्रियाहेतुकार्य्यत्वाभिरूपित
कारकतावत्त्वं । देवदत्तस्तण्डुलं पचतीत्यादौ रूपितस्थापयत्वमत्वेन
तण्डुलनिष्ठक्रियाहेतुः । (इत्यादि)

**End.** रूपितमत्वाक्षेपो नास्ति ।

**विषयः ।** कारकचक्रस्य व्याख्यानम् ।

---

**No. 56.** कारकपादटीका, By सर्व्वविद्यालङ्कारः । Substance, country-made paper, 12 × 3 inches. Folia, 82. Lines, 10 on a page. Extent, 3,382 çlokas. Character, Bengali. Date ? Place of deposit, Telivine Post Gadvetá Paṇḍita Candranátha Cúḍámaṇi. Appearance, tolerable. Prose. Generally. Correct.

**Beginning.** श्रीरामः । विवृतमविनापि नाम्नः कर्त्रादिसंज्ञाविधानपूर्व्वकं प्रथमादिविभक्तिविधानार्थं तद्धितपादानन्तरं कारकपादमारभमाणः कारकेषु मुख्यत्वात् कर्त्तृलक्षणं प्रथममभिदधाति । क्रियाप्रकृतिप्रत्ययविभागपरिकल्पनया शब्दसाधुत्वप्रतिपादकशास्त्रस्य व्याकरणत्वे कथं संज्ञासूत्रस्य व्याकरणत्वं॥ कर्त्रादिसंज्ञाविधानेन सुप्प्रत्ययान्तस्य प्रकृतिप्रत्ययविभागोऽत्र क्रियते इत्यदोषः ।

**End.** षष्ठी । एतत्तु प्रयोगप्राचुर्य्यादुक्तं यथान्तरेऽपि सूत्रे विभक्तिदर्शनात् पाठे वार्त्तिकादेशे वार्त्तिकारोपचारः । षष्ठ्यन्तपाठस्तु सम्यगेव भावकर्म्मणोरिति । एवञ्च इत्थौ क्वचित् भावकर्म्मणोरात्मनेपदमिति पाठो लिपिकरप्रमादादेव । भावकर्म्मणोरिति पाणिनिसूत्रे षष्ठ्यन्त इत्यस्याभावात् अनुदात्तङित आत्मनेपदमित्यादि ।

**Colophon.** इति नयद्रकुलोद्भवसर्व्वविद्यालङ्कारभट्टाचार्य्यविरचितायां पञ्चकारकपादः समाप्तः ॥

**विषयः ।** कातन्त्रव्याकरणस्य कारकपादस्य व्याख्यानम् ॥

---

**No. 57.** कारकरत्नं, By दुर्गसिंहः। Substance, country-made paper, 19×6½ inches. Folia, 7. Lines, 10 on a page. Extent, 350 çlokas. Character, Bengali. Date ? Place of deposit, Alágán Mayamansinha Govindadása Kṛtiratna. Appearance, new. Prose. Correct.

**Beginning.** नमो गणेशाय। वर्णशब्दोऽयमन्त्यन्ताभाववचनं ततो धातुविभक्त्यन्ताभाववदर्थवज्जिङ्गमिति कविराजः।

**End.** एताय परिज्ञातवाच तदर्थेनैव सिद्धाति चसतीति क्रियायोगे (एतेन) कालं उच्यते।

**Colophon.** इति दुर्गसिंहविरचितं कारकरत्नं सम्पूर्णम् ॥

**विषयः।** षट्कारकाणां विचारः।

---

**No. 58.** कारकरहस्यं, By रूपरामन्यायपञ्चाननः। Substance, country-made paper, 17×3 inches. Folia, 14. Lines, 8 on a page. Extent, 616 çlokas. Character, Bengali. Date, S.K. 1709 ? Place of deposit, Brámhaṇa maṇḍalí Rámanáráyaṇa Bhṭṭácáryya. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय। ॐ नमः सरस्वत्यै।
कृष्णं प्रणम्य संसारसृष्टिस्थित्यन्तकारकम्।
कृतं श्रीरूपरामेण रहस्यं कारकस्य हि ॥
शैशवे पद्मासाद्य भक्तियुक्तेन चेतसा।
शिशूनामवधानार्थं सुपद्यस्यानुसारतः ॥
अथ कारकनिर्णयः। तथाहि।
कर्त्ता कर्म्म च करणं सम्प्रदानमतःपरम्।
अपादानञ्चाधिकरणं कारकाः षट् प्रकीर्त्तिताः ॥
एतेन षट्कारकनिरूपणेन क्रमनिरूपणं सिद्धम्।

**End.** अथोच्यते द्विविधवादिमते उक्ते कारकेऽर्थातिरिक्त प्रातिपदिकार्थस्य कुत्सितत्वात्। अतएव पञ्चकवादी यत् स्वीकरोति तदेतदभिप्रायेण अनुक्ते तु कैरपि न स्वीकृतः। अतएव सत्याभावे अर्थातिरिक्तप्रातिपदिकार्थमात्रनिमित्तं वाचका भवन्तीति व्याख्यानं सङ्गच्छते।
तथाचोक्तं यस्मिन् वाच्ये विधीयन्ते त्यादि तथाहि तद्धिताः ॥

समासो वा भवेद्यत्र स उक्तः प्रथमा ततः । त्यादिविहः तथादिः क्रत् ।
शेषा विभक्तिस्तु तमद्ध्याकरणेऽनुसन्धेया ॥

**Colophon.** इति श्रीरूपरामन्यायपञ्चाननभट्टाचार्य्यविरचितं कारकचक्रं समाप्तम् ॥ ० ॥
नवबाब्धिविधुप्रमिताब्दतने प्रतिपद्बुधवासरदशिरवौ ।
शिवराम इदं यलिखित् पठितुं प्रविपत्य रथंमतवाममकम् ॥

**विषयः ।** विचारपूर्वक कारकादिनिर्णयः ।

---

**No. 59.** **कालीध्यानटीका ।** Substance, country-made paper, 18 × 5 inches. Folia, 3. Lines, 9 on a page. Extent, 101 çlokas. Character, Bengali. Date, ? Place of deposit, Varasikurá Mayamansinha Ánandamohana Cakravartti. Appearance, tolerable. Prose. Correct.

**Beginning.** ॐ नमः काल्यै । करालवदनां घोरां इत्यादि । ईदृशीं कालिकां ध्यायेत्
साधकोत्तमः इत्यन्वयः ।

**End.** पुनः कीदृशीम् विकसितमाननसरोरुहमाननपद्मं यस्या तां आननं सरो-
रुहमिवेति लुप्तोपमा । ॥ ० ॥

**विषयः ।** करालवदनामित्यादिकस्य तन्त्रोक्तस्य कालीध्यानस्य व्याख्यानम् ।

---

**No. 60.** **कालीसर्व्वस्वसम्पुटः**, By **श्रीब्रह्मविद्यालङ्कारः** । Substance, country-made paper, 19 × 5 inches. Folia, 134 (without one leaf). Lines, 8 on a page. Extent, 4,256 çlokas. Character, Bengali. Date, ? Place of deposit, Májpará District Dháká, Bábu Rása Bihári Ráya. Appearance, new. Prose and verse. Incorrect.

**Beginning.** ॐ नमः कालिकायै ।
यामाद्यां परात्परतरां शम्भोः सदा मोदिनीं
ब्रह्माद्यैर्मुनिवृन्दैः सदार्चितपदां सिद्धैः सदा सेवितां ।
प्राज्ञा ज्ञान + + + च्छमय + तां विश्वरूपात्मिकां
वन्दे दक्षिणकालिकां भवभयाब्धितारकारां शिवां ॥
नमामि कालीं कलिकल्मषघ्नीं
ब्रह्मादिभिः सेवितपादपद्मां ।
भक्तप्रसादप्रतिपादयित्रीं
देवे सदानन्दविधानदात्रीं ॥

गणेशं क्षेत्रपालञ्च योगिनीं बटुकं तथा ।
श्रीगुरुञ्च नमस्कृत्वा ज्ञानमोक्षप्रदायकम् ॥
ध्यायनागौरिपुत्रेण श्रीश्रीकृष्णेन धीमता ।
क्रियते विदुषां प्रीत्यै काल्लीकल्पलतस्पुटः ॥
दृष्ट्वैधमालोक्य विहाय मत्सरं
बुधाः सदेदं परिष्कारकञ्च ।
ग्रन्थं सदामोदविधानदक्षं
भूयोऽपि याचे करसम्पुटेन ॥
अत्र च ।
कालीतन्त्रं वीरतन्त्रं भैरवं तन्त्रसंज्ञकम् ।
भैरवी च महातन्त्रं तन्त्रञ्च वीरभद्रकम् ॥
वामकेश्वरमहातन्त्रं तन्त्रं समयसंज्ञकम् ।
फेत्कारीं योगिनीञ्चैव मत्स्यसूक्तञ्च यामलम् ॥
डामरं भूतसंज्ञञ्च सिद्धसारस्वतं तथा ।
योगिनीहृदयञ्चैव कालिकाहृदयं तथा ॥
कालिकाकुलसर्वस्वं कुमारीतन्त्रमुत्तमम् ।
कुलार्णवमहातन्त्रं चामुण्डातन्त्रमुत्तमम् ॥
मुण्डमालामहातन्त्रं नीलतन्त्रं तथैव च ।
कुलसारं विश्वसारं स्वतन्त्रं शारदां तथा ॥
ज्ञानार्णवञ्च भूतेशं कुब्जिकातन्त्रमुत्तमम् ।
कालीकल्पमहातन्त्रं तथा भावचूडामणिम् ॥
वैष्णवोक्तञ्च यत् तन्त्रं यदन्यच्छक्तितन्त्रकम् ।
कालिकोपनिषत् सूक्तं गुरुवाक्यप्रमाणतः ॥
एतान् निश्चित्य यत्नेन उच्यते ग्रन्थसंग्रहः ॥
तत्रादौ प्रसङ्गादागमप्रशंसामाह रुद्रयामले ।
आगमोक्तविधानेन कलौ देवान् यजेत् सुधीः ।
न हि देवाः प्रसीदन्ति कलौ चान्यविधानतः ॥ इत्यादि ।

End. अथ निषेधमाह यामले ।
गुरुशय्यासनं यानं पादुकोपानत्पीठकम् ।
स्नानोदकं तथा छायां लङ्घयेन्न कदाचन ॥

आसने शयने वापि न तिष्ठेदग्रतो गुरौ ।
अनुज्ञां प्राप्य तिष्ठेत नैवं पापं समाप्नुयात् ॥
वामे वा दक्षिणे वापि तिष्ठन्नेव न चान्यतः ।
अनुज्ञां गृहीत्वा गच्छेत्तु न च स्वेच्छामयं तथा (?) ॥

**Colophon.** इति न्यायवागीशभट्टाचार्य्यात्मज श्रीश्रीकृष्णविद्यालङ्कारविरचितः काली-सर्व्वस्वसम्पुटो ग्रन्थः समाप्तः ॥

**विषयः।** अथ दीक्षाप्रसङ्गकथनम् । अष्टविधकालीभेदकथनम् । तत्र कालिकाशब्द-निर्व्वचनम् । तन्मन्त्रोद्धारः । प्रातःकृत्यविधिः । गुरुस्तोत्रादिः । कुलवृक्षनमस्कारादिकथनम् । शौचादिविधिः । स्नानविधिः । सन्ध्याविधिः । सूर्य्योपस्थानविधिः । पूजाविधिः । जप-पूजनयोस्तुल्यत्वकथनम् । पञ्चशुद्धिकथनम् । आचमने मुद्रानियमः । कुलचन्दनविधिः । आसनविधिः । प्राणायामविधिः । भूतशुद्धिविधिः । प्राणप्रतिष्ठाविधिः । ऋष्यादिन्यासविधिः । अङ्गन्यासकरन्यासयोः विधिः । मातृकान्यासविधिः । वर्णन्यासविधिः । श्रीकण्ठन्यासविधिः । तत्त्वन्यासविधिः । बीजन्यासविधिः । गुह्यषोढान्यासविधिः । शिवशक्तिन्यासविधिः । नव-पीठन्यासकथनम् । अन्तर्यागविधिः । बहिर्यागविधिः । तत्र अर्घ्यादिविधिः । ध्यानादिप्रयोगः । प्राणायामादिविधिः । महाकालपूजाविधिः । आवरणपूजाविधिः । पादोदकमाहात्म्यकथनम् । महाविद्यापूजनादौ सूतकादेरप्रतिबन्धकताकथनम् । रश्मिष्टकपूजाविधिः । कालाष्टकस्तोत्र । कर्पूरादिस्तोत्र । दक्षिणकालिकास्तोत्र । परपरशुरामस्तोत्र । शङ्खगाथाकथनम् । कालिको-पनिषत् । कालिकाया जगन्मङ्गलकवचम् । कालिकायाः सर्व्वार्थसारकवचम् । कालीकवच-कथनम् । कालीकुल्लुकाकवचकथनम् । त्रैलोक्यमङ्गलकवचकथनम् । सर्व्वार्थसाधनकवचम् । अष्टशक्तिस्तवः । त्रैलोक्यमोहनकवचम् । कालीसहस्रनामस्तवः । महाशङ्खादिमालाविधिः । मालासंस्कारविधिः । अशौचमालादिशोधनविधिः । मन्त्रसंस्कारादिविधिः । मन्त्रसिद्धिकथनम् । कुल्लुकादिज्ञानोपायकथनम् । शिवाबलिविधिः । छागादिबलिविधिः । पुरश्चरणविधिः । वीरपुरश्चरणविधिः । नित्यहोमविधिः । विशेषहोमपद्धति । होमद्रव्यपरिमाणादिकथनम् । कामनाभेदेन होमद्रव्यविशेषविधिः । कूर्म्मचक्रविधिः । पञ्चपुरश्चरणप्रयोगः सूर्य्योदयपुरश्च-रणप्रयोगः । शरत्कालीनपुरश्चरणप्रयोगः । रहस्यपुरश्चरणप्रयोगः । मन्त्रसिद्धिप्रमाणकथनम् । भूतलिपिविधिः । त्रिलोकीमुद्रालक्षणादिकथनम् । कुलाचारमाहात्म्यादिकथनम् । कुमारी-पूजाविधिः । दूतीयागनिरूपणम् । योनिपूजादिविधिः । पञ्चमकारविधिः । विजयाकल्प-कथनम् । मांसशोधनविधिः । मत्स्यशोधनविधिः । मुद्राशोधनविधिः । मैथुनशोधनविधिः । शक्तिषु पीठनिरूपणम् । स्वयम्भूकुसुमादिशोधनविधिः । शोणितशुद्धिकथनम् । स्वयम्भू-कुसुमादेरनुकल्पकथनम् । वीरसाधनविधिः । तत्र शवसाधनादिकथनम् । विविधेन प्रकारेण

मयसाधनविधिः। योगिनां नित्यकृत्यकथनम्। अथ षट्कर्म्मकथनम्। तत्र उच्चाटनविधिः। विद्वेषणविधिः। स्तम्भनविधिः। षट्कर्म्मक्रमकथनम्। आकर्षणविधिः। वशीकरणविधिः। गुरुचरणचिन्तनप्रकारकथनञ्च॥

No. 61. कालीसहस्रनामस्तुतिरत्नटीका, By पूर्णानन्दः। Substance, country-made paper, 18 × 4½ inches. Folia, 40. Lines, 6 on a page. Extent, 990 çlokas. Character, Bengali. Date, ? Place of deposit, Serpur Mayamansiñha, Mahámahopádhyáya Candrakánta Tarkálaṃkára. Appearance, tolerable. Prose. Correct.

**Beginning.** ॐ नमः काल्यै॥

प्रणम्य कालीचरणारविन्दं ब्रह्मादिभिर्ध्येयमनन्तपुण्यं।
सहस्रनामस्तुतिरत्नटीकां तनोति तत्पादतलैकचित्तः॥
कैलासशिखरे देवी शङ्करं पप्रच्छ कैलासे किम्भूते रम्ये नानारत्नविभूषिते नानावृक्षलताकीर्णे व्याप्ते नानापक्षिरवैर्युते चतुर्मण्डपसंयुक्ते चतुर्म्मण्डलेति क्वचित् पाठः।

**End.** यद्वा पाठयेत् पठेच्चेति दिवसं वन्ध्यं न चरेत् अवन्ध्यं दिवसं कुर्य्यात् इत्यर्थः।

इति गदितमशेषं कालिकावर्णरूपं
प्रपठति यदि भक्त्या सर्व्वसिद्धीश्वरः स्यात्।
अभिनवसुखकामः सर्व्वविद्याभिरामो
भवति सकलसिद्धिः सर्व्ववीरा सवद्भिः॥
सर्व्ववीरा सर्व्वश्रेष्ठा सर्व्वाधिका वा सवद्भिर्भवेदिति॥०॥
इति संक्षेपतः प्रोक्तं किमन्यत् श्रोतुमिच्छति।

**Colophon.** इति पूर्णानन्दपरमहंसविरचिता सुन्दरीवरदानाख्यमेधासाम्राज्यनामकालीसहस्रनामस्तुतिरत्नटीका समाप्ता।

विषयः। कालीसहस्रनामस्तुतिरत्नाख्यस्य कालीस्तोत्रस्य व्याख्यानम्।

No. 62. कालीसहस्रनामस्तोत्रटीका। Substance, country-made paper, 10 × 5 inches. Folia, 48. Lines, 8 on a page. Extent, 608 çlokas. Character, Bengali. Date, Sk. 1744. Place of deposit, Kánṭhálpárá, post office Naiháṭi, Paṇḍita Rámatáraṇa Thákura. Appearance, tolerable. Prose. Correct.

**Beginning.** ॐ नमः परमदेवतायै । अथ कालीसहस्रनामटीका ।
कालीं कल्याणकर्त्रीं करकलितकरां हृद्यमूर्त्तिं हृद्यार्त्तीं ।
(......) अथ परमकारुणिकः परमशिवो गुह्यातिगुह्यतरां परविद्यां
कलिकलुषहरां श्रीमद्दक्षिणकालिकां श्रीविद्याप्रस्तावतः सहस्रनाम्नां टीकां
प्रकाशयति कैलास इत्यादिना ॥

**End.** महाकालसंहिता कालीकालसम्वादे सुन्दरीक्रियाविशेषणमिति व्याख्याय
तथा पठन्ति तत्तु भाव्यमिति ।

**Colophon.** इति श्रीमदादिनाथमहाकालोक्तमहाकालसंहितायां कालीकालसम्वादे
सुन्दरीशक्तिदानाख्यकालिकारूपककारादिकसहस्रनामस्तोत्रटीका समाप्ता ॥
शकाब्दा १७४४ ॥

**विषयः ।** महाकालसंहितान्तर्गतकालीसहस्रनामस्तोत्रस्य व्याख्यानम् ।

---

**No. 63.** कालोत्तरम् । Substance, country-made paper, 11 × 2 inches. Folia, 9. Lines, 4 on a page. Extent, 81 çlokas. Character, Bengali. Date, ? Place of deposit, Usṭhi Mayamansiñha Kálícandra Nyáyálaṇkára. Appearance, old. Verse. Correct.

**Beginning.** ॐ नमो गणेशाय ।
कालोत्तरं प्रवक्ष्यामि राशिमाश्रित्य केवलम् ।
येन विज्ञानमात्रेण सर्व्वज्ञत्वमवाप्नुयात् ॥
स्वभावो लक्षणञ्चैव अपमृत्युस्तथैव च ।
कालमृत्युश्च सर्व्वेषां कालोत्तरः प्रकाशकः ॥
भावचिह्नापमृत्युश्च महामृत्युस्तथैव च ।
राशिक्रमेण विज्ञेया यत्र कालोत्तरो हि यः ॥

**End.** परे चायायणे मासि नवम्यां सितपक्षके ।
शरोऽङ्गिरा वेददण्डे शूलरोगेण नश्यति ॥

**Colophon.** इति कालोत्तरं समाप्तम् ॥

**विषयः ।** राशिनक्षत्रादियोगक्रमेण अकालमरणादिनिरूपणम् ॥

---

**No. 64.** काव्यप्रकाशविस्तारिका, By परमानन्दचक्रवर्त्ती। Substance, country-made paper, 12 × 3 inches. Folia, 43. Lines, 7 on a page. Extent, 1429 çlokás. Character, Bengali. Date, ? Place of deposit, Naiháṭi, Paṇḍita Haraprasáda Çástrí. Appearance, old. Prose. Generally correct.

**Beginning.** (अस्य ग्रन्थस्याद्यपत्त्रत्रयं नास्ति तेन प्रारम्भवाक्याभावात् अष्टादशपत्रस्थित द्वितीयोल्लासस्य प्रारम्भवाक्यं लिख्यते)
अथ्रनान्तरनिरूपणोद्देशलशब्दात्मकविभागपरं द्वितीयोल्लासं यावत् तत्-क्रमेणेत्यादि प्रथमं शब्दस्य ततोऽन्यस्येत्याद्यर्थः क्रमश्च।

**End.** (अस्य शेषांशखण्डितत्वात् अष्टचत्वारिंशत्पत्रस्थद्वितीयोल्लासस्य समाप्तिवाक्यं लिख्यते)
इति सहकारिणोद्भटशक्तिमत्त्वेन तादृशशब्दस्यैवान्वयव्यतिरेकाभ्यविभानात् अतएव शब्दमूलत्वव्यपदेश इति भावः॥

**Colophon.** इति श्रीपरमानन्दचक्रवर्त्तिकृतौ काव्यप्रकाशविस्तारिकायां द्वितीयोल्लासः॥*

विषयः। काव्यप्रकाशनामकालङ्कारग्रन्थस्य व्याख्या।

---

**No. 65.** काशीतत्त्वप्रकाशिका, By रघुनाथेन्द्रशिवयोगी। Substance, country-made paper, 14 × 4 inches. Folia, 41. Lines, 6 on a page. Extent, 645 çlokás. Character, Bengali. Date, ? Place of deposit, Çrínagara, District Dháká, Babu Rajaníkánta Guha. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ नमो गणपतये। मत्स्यपुराणे।
यथा नारायणः श्रेष्ठो देवानां पुरुषोत्तमः।
यथेश्वराणां गिरिशः स्थानानामेतदुत्तमम्॥
वायुपुराणे।
मत्समः पुरुषो नास्ति त्वत्समा नास्ति चाङ्गना।
अविमुक्तसमं क्षेत्रं न भूतं न भविष्यति॥
ब्रह्मपुराणे। मार्कण्डेय उवाच।
एकमेव जगन्नाथ पृच्छेयं त्वत्प्रसादतः।
लोकानाञ्च हितार्थाय नानाभारप्रशान्तये॥

शैवभागवतानाञ्च वेदार्थप्रतिषेधकम् ।
अस्मिन् क्षेत्रवरे पुण्ये निर्मले पुरुषोत्तमे ॥
शिवस्यायतनं देव करोमीति परं मतम् ।
प्रतिष्ठेयं यथा तत्र तव स्थाने च शङ्करम् ॥
ततो हास्यन्ति लोकेऽस्मिन् एकमूर्त्तौ हरीश्वरौ ।
प्रत्युवाच जगन्नाथः स पुनस्तं महामुनिम् ॥
यदेतत् परमं देवं कारणं भुवनेश्वरम् ।
लिङ्गमाराधनार्थाय यस्य ते मतिरीदृशी ॥
मम हृष्टेन विप्रेन्द्र कुरु शीघ्रं शिवालयम् ।
मत्प्रसादात् शिवलोके तिष्ठसे त्वं तथाक्षयम् ॥
शिवे संस्थापिते विप्र ममस्तस्थापनं भवेत् ।
नावयोरन्तरं किञ्चिदेकभावौ द्विधाकृतौ ॥
यो रुद्रः स स्वयं विष्णुर्यो विष्णुः स महेश्वरः ।
उभयोरन्तरं नास्ति पवनाकाशयोरिव ॥
मोहितो नाभिजानाति स एव गरुडध्वजः ।
वृषध्वजः स एवेति त्रिपुरघ्नस्त्रिविक्रमः ॥

**End.**

पराशरोपपुराणे ।
अनेनोत्क्रममाणस्य जन्तुमात्रस्य केवलम् ।
वेदवेदान्तसारस्य प्रणवाख्यस्य पार्व्वति ॥
ब्रह्मणस्त्वर्थभूतोऽहं संसारद्रावकश्चिरात् ।
कृपया मामकं रूपं परिपूर्णं पराद्भुतम् ॥
आनन्दं सत्यचिद्रूपं तावकं तमसः परम् ।
स्वयं भूतं निराधारं दास्यामि ...... ॥
अत्रैव मरणं सम्यक् यस्य सिध्यति देहिनः ।
विज्ञानसाधनं तेन सर्व्वं पूर्व्वमनुष्ठितम् ॥
सेवया ... विनश्यन्ति पापानि सकलानि तु ।
सेवयास्य समं नास्ति प्रायश्चित्तं न संशयः ॥
तस्मात् सर्व्वं परित्यज्य क्षेत्रमेतत् समाश्रयेत् ।
त्वया मया च देवेशि सेवितञ्च महर्षिभिः ॥
क्षेत्रस्यैवास्य माहात्म्यं मया वक्तुं न शक्यते ।

जावालोपनिषत् साक्षात् स्वयं जानाति वा न वा ॥
ग्रन्थसंख्या पुराणानि सादरं तस्य पार्श्वतः ।
वदन्ति लोकरक्षार्थं महात्म्यानस्य भैरवम् ॥

**Colophon.** इति शिवयोगिरघुनाथेन्द्रविरचिता काशीतत्त्वप्रकाशिका समाप्ता ॥

**विषयः** । मत्स्यपुराण-वायुपुराण-ब्रह्मपुराण-परमशरोपपुराण-कूर्म्मपुराण कालीपुराण-पद्म-पुराण-स्कन्दपुराण-महाभारतीयवनपर्व्व- हरिवंश-बृहज्जावालश्रुति-लघुजावाल-श्वेताश्वतरोपनि-षन्मेरुतन्त्र-काशीखण्डप्रभृतिभ्यः प्रामाणिकग्रन्थेभ्यः काशीक्षेत्रस्य माहात्म्यसूचकानां वचनानां संग्रहः प्रसङ्गतश्च कपर्द्दीश्वर-धर्म्मेश्वर-केदारेश्वर-कृत्तिवासेश्वर-वीरेश्वर-वीरेश्वर-दुर्गा-मणिक-र्णिकादीनां माहात्म्यकीर्त्तनञ्च ॥

---

**No. 66.** काशीभाष्यामृतं, By रामरत्नवन्द्योपाध्यायः । Substance, country-made paper, 12 × 5 inches. Folia, 355. Lines, 8 on a page. Extent, 8520 çlokas. Character, Bengali. Date, ? Place of deposit, Yaçodala Mayamansiñha, Pandita Harinátha Tarkabhúṣaṇa. Appearance, tolerable. Verse. Correct.

**Beginning.** ॐ नमो गणेशाय । ॐ नमः काश्यै ।
काशीविश्वेशनारायणगणपमुखान् सर्व्वदेवान् प्रणम्य
नत्वा गोस्वामिनं श्रीगुरुमतिविमलैः श्रीधरानन्दसंज्ञं ।
काशी ब्रह्मैव साक्षादिति हृदयसुखं तत्सदाम्नायसारात्
काशीभाष्यामृतं संविरचयति मुदा रामरत्नाख्यवन्द्यः ॥
चातराग्रामवास्यादौ काशीवासी ततः परम् ।
श्रीरामरत्नवन्द्यः स कालचन्द्रद्विजार्थदः ॥
श्रीश्यामाचरणाख्यवन्द्यन्नपतेः काश्यां सभा सत्प्रभा
यस्यां काशीकथा सदा समुचिता तत् काशीभाष्यामृतं ।
व्यक्तीकृत्य तदाज्ञया प्रमुदितः श्रीरामरत्नो द्विजो
वाक्यानां रचनात्मक च मुदा श्रीकालचन्द्रो द्विजः ॥
विश्वेशं माधवं ढुण्ढिं दण्डपाणिञ्च भैरवं ।
वन्दे काशीं गुहं गङ्गां भवानीं मणिकर्णिकाम् ॥
इति उपक्रमणिका । श्रुतिस्मृतिपुराणेतिहासप्रसिद्धा काशीमुक्तिरनुपमा-इति ।

**End.**

मुक्तिक्षेत्राणि सर्व्वाणि यत् संवेद्योदितं फलम्
पञ्चरात्रागमज्ञास्तु निवेद्य मणिकर्णिकाम् ॥
प्रयागस्नानपुण्येन यत् पुण्यं स्यान्निवप्रदम् ।
काशीदर्शनमात्रेण तत् पुण्यं श्रद्धयान्वित ॥
यत् पुण्यमश्वमेधेन यत् पुण्यं राजसूयतः ।
काश्यां तत् पुण्यमाप्नोति त्रिरात्रशयनाद्यमी ॥
तुलापुरुषदानेन यत् पुण्यं सम्यगाप्यते ।
काशीदर्शनमात्रेण तत् पुण्यं श्रद्धयान्वित ॥
इति विष्णोर्वचः श्रुत्वा देवदेवो जगत्पतिः ।
उवाच च प्रसन्नात्मा तथास्तु मधुसूदन ॥

**Colophon.** इति काशीभाष्यार्णवेऽष्टाशीतितमः परिच्छेदः : ८

**विषयः।** काशीभाष्यकरणप्रयोजनकथनम् । ज्ञानाद्यभिमानभञ्जनावश्यकत्वकथनम् । भवज्वरादिनिरूपणम् । दिवोदासोच्चाटनवर्णनम् । वारणावतमाहात्म्यादिकथनम् । हिमालयपार्श्वस्थितसौम्यकाशीमाहात्म्यम् । पार्व्वत्या एकाम्रवनगमनादिवर्णनम् । हरिहराभेदनिरूपणम् । पद्मपुराणोक्तकाशीमाहात्म्यादिकथनम । सर्व्वसम्मतकाशीमुक्तिनिरूपणम् । युगधर्म्मनिरूपणम् । व्यासभिक्षावारणादिकथनम् । काशीसर्व्वोत्तमत्वादिनिरूपणम् । काशीप्रादुर्भावादिकथनम् । कपालमोचनतीर्थमाहात्म्यादिकथनम् । ब्रह्महत्यादिपापनिष्कृतिनिरूपणम् । ज्ञानोपदेशादिनिरूपणम् । काश्याश्रयणनिरूपणम् । निर्व्वाणपरोक्षादिनिरूपणम् । काशीकृतपापप्रायश्चित्तादिनिरूपणम् । त्रिपुण्ड्रोर्द्ध्वपुण्ड्रधारणादिनिरूपणम् । शिवापराधभञ्जनादिप्रकारकथनम् । गङ्गामाहात्म्यादिनिरूपणम् । ब्राह्मणमाहात्म्यादिकथनम् । शिवप्रसादमाहात्म्यादिकथनम् । शिवपूजाविध्यादिः । काश्याश्रितसर्व्वतीर्थनिरूपणम् । तारकोपदेशकथनम् । काशीकृतपापयातनादिवारणप्रकारनिरूपणम् । शिवविष्णुवैषम्यभावभञ्जनादिकथनञ्चेति विस्तरः ॥

---

**No. 67.** कीरदूतं, By रामगोपालः । Substance, country-made paper, 14×3 inches. Folia, 12. Lines, 6 on a page. Extent, 238 çlokas. Character, Bengali. Date, S. ·K. 1778 Place of deposit, Dhánuká, Post office Pálanga, District Fariápura Paṇḍita Jagadbandhu Vidyábhúṣaṇa. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ नमः श्रीकृष्णाय ।

विष्णुश्रीरोमजनिवसनं श्रीचपादारविन्दं
वर्ह्युत्तंसं नवजलधरश्याममम्भोजचक्षुं ।

कुञ्जद्रोणीविलसदधरं सुन्दरं शेखराङ्गं
पूर्णानन्दं किमपि ललितं ज्योतिरालोकयामि ॥
वृन्दारण्ये खगमृगकुलाक्रान्दशून्ये तदान्ते
भास्वत्पुत्र्या दयितविरहोत्तापसन्तापितानां ।
गोपस्त्रीणां ...... दृष्टा मण्डले दुःखिनीनां
वाचेत्युच्चैः ............ नर्म्मभित् सर्व्वदासीत् ॥
मध्ये तासामपि च शुशुभे तप्तकार्त्तस्वराङ्गी
सुश्रोणीनां कमलजदलस्थालसत् कर्णिकेव ।
दीना क्षीणा सजलनयना नीरसा...... कण्ठी
मर्त्युं नैच्छद्विरहदहनोत्तापतप्ता तदा किं ॥
काचिद्गोपी विनयवचनैः सान्त्वयित्वा मृगाक्षीं
भर्त्तुर्वार्त्तागमनसुलभं जीवनं सानुमेने ।
इत्थं चिन्ताकुलितहृदया पश्चिमं कीरमारात्
प्रीत्यापश्यत् सुरसिकमनोहारिणं विम्बचञ्चुं ॥
प्रत्यूचे तं सुमधुरगिरा प्रीणयित्वा वराङ्गी
कीरास्माकं त्वमतिकुशलो दौत्यकर्म्मण्युताम्मिन् ।
मन्यस्त्रीणां विविधवचनं त्वन्मुखोद्गीतहृद्यं
श्रोष्यत्येव प्रमुदितमना माधवो यादवाग्रः ॥ इत्यादि ॥

End

काहं कोवा मम तु दयितो नैव किञ्चित् स्मरामि
शोकः कोऽपि स्फुरति हृदये श्यामलाङ्गोऽग्निरूपः ।
कस्मादेतौ दहति स च मां निर्दयः किं करोमी-
त्युक्त्वा भूमौ न्यपतदिव सा संवृतास्पन्दनाक्षी ॥
तथ्यायावेदयितुमपि तां दुर्दशां तत् प्रियाया
अत्यौत्कण्ठ्यात् झटिति मथुरां नागराय प्रियाय ।
वृन्दारण्याद्व्यथितहृदयो व्यक्तरूपः प्रतस्थे
कीरो धीरः सुसदुपगतो दौत्यकर्म्मैकदक्षः ॥
राधादेवीविरहसहितोपेन्द्रलीलारहस्यं
... नेदं ज्ञानमपि मया कीरदूताख्यकाव्यम् ।
...... प्रभवकविना रामगोपालकेन
प्रेमात्मानोऽमृतमिव सदा सन्त आस्वादयन्तु ॥

दोर्दर्पेण वशीकृताः क्षितिभुजो यस्यैव सर्व्वावनौ
यस्याशेषगुणप्रदीप्तयशसा प्रच्छादितं भासनम् ।
वर्षेऽस्मिन् परिषत्सु यस्य कवयः श्रीकालिदासोपमाः
काव्यं कीरवचोवरं वितनुते तस्यैकसख्यो बुधः ॥ समाप्तोऽयं ग्रन्थः ।

Colophon. शाके वस्वब्धिशैलक्षितिपरिगणिते मार्गशीर्षे कुजाह्वे
नारिश्याः पादपद्मं स्मरस्फुरद्धृदि ध्यायमानं मुनीन्द्रैः ।
नत्वा कीराख्यदूतं सुमधुरवचः स्वीयपाठार्थमेतत्
व्यालेखीद्रामनाथो वटुरिह च गुरोः संस्मरन् श्रीयुताङ्घ्रिं ॥
श्रीदुर्गाचरणे सदा भवतु मे भक्तिः पदाब्जं गता ॥

विषय । कीरमुखेन मथुरागतं श्रीकृष्णं प्रति श्रीराधायाः सन्देशप्रेरणम् ॥

---

**No. 68.** कीर्त्तनचिन्तामणिः, By रघुनाथभट्टः । Substance, country-made paper, 3 × 5 inches. Folia, 8. Lines, 11 on a page. Extent, 176 çlokas. Character, Bengali. Date, ? Place of deposit, Agartalá Vṛddhanagara Paṇḍita Míneçvara Sárbabhauma. Appearance, tolerable. Verse. Generally correct.

**Beginning.** श्रीगौरविधुर्जयति ।
अथ कीर्त्तनचिन्तामणिलक्षणम् ।
श्रीवाल्मीकपुराणे यथा ।
श्रीमद्रूपगोस्वामिपदारविन्दचिन्मया ।
गीतचिन्तामणि ग्रन्थः श्रीरघुनाथेन निर्म्मितः ॥
चरितं यथा ।
निमन्त्रणाधिवासादिभावकानाञ्च गायकाः ।
मान्द्यपरिधिरागाणां यत् यत् कीर्त्तनलक्षणम् ॥ इत्यादि ।

**End.** सर्व्वत्र स्मरणमेव(?) गौराङ्गः सदयो भवेत् ।
पार्श्वदं तथारूपेण प्रतिजन्मसु सङ्गमम्(?) ॥

**Colophon.** इति श्रीरामाद्भुतिपुराणे भरद्वाजं प्रति श्रीवाल्मीकमुन्युक्तं तदुद्भूतः संग्रहः श्रीरघुनाथभट्टगोस्वामिरचितः कीर्त्तनचिन्तामणिग्रन्थमिति एकशाखापर्व्वगीतः सम्पूर्णम् ॥ (?)

विषयः । कीर्त्तनस्य लक्षणादिकथनम् ॥

---

**No. 69.** **कुमारिकाखण्डः स्कन्दपुराणीयः।** Substance, country-made paper, 12×4½ inches. Folia, 182. Lines, 10 on a page. Extent, 7,025 çlokas. Character, Bengali. Date, Sk. 1724. Place of deposit, Calcutta. Çyámapukur Visvakoṣa Office. Bábu Nagendra Nátha Basu. Appearance, new. Verse. Generally correct.

**Beginning.** श्रीगणेशाय नमः। मुनय ऊचुः ९

दक्षिणार्णवतीरेषु यानि तीर्थानि पश्च च।
तानि शृणु विशालाच वर्णयन्यति तानि च॥
सर्व्वतीर्थफलं येषु नारदाद्या वदन्ति च।
तेषां चरितमाहात्म्यं श्रोतुमिच्छामहे वयम्॥
उग्रश्रवा उवाच।
शृणुध्वमद्भुतं पुण्यं तत्कथां कुमारनाथस्य महाप्रभावम्।
द्वैपायनो यन्मम चाह पूर्व्वं हर्षाम्बुरोमोद्गमचर्च्चिताङ्गः।
कुमारगीता गाथाश्च श्रूयतां मुनिसत्तमाः।
या सर्व्वदेवैर्मुनिभिश्च पूजिता॥
साध्वाचारस्तम्भतीर्थं यो निषेवेत मानवः।
नियतं तस्य वासः स्यान्मम लोके यथा मम॥

**End.** इति वो वर्णितः पुण्यो महीसागरसम्भवः।
शृण्वन् संकीर्त्तयंश्चैनं सर्व्वपापैः प्रमुच्यते॥
य इदं श्रावयेद्विद्वान् महीमाहात्म्यसम्भवम्।
सर्व्वपापविनिर्म्मुक्तो ब्रह्मलोकमवाप्नुयात्॥
गुप्तक्षेत्रस्य सकलं माहात्म्यं श्रावयेद्यदि।
सर्व्वैश्वर्य्यमवाप्नोति ब्रह्महत्यां व्यपोहति॥
खण्डमखिलं खण्डं ब्राह्मणाय निवेदयेत्।
यथाशक्त्या सुवर्णञ्च गां भूमिं प्रयतः शुचिः॥
सन्तुष्टे ब्राह्मणे तुष्टो महेशो जायते ध्रुवम्।

**Colophon.** इति श्रीस्कन्दपुराणे कुमारिकाखण्डे गुप्तक्षेत्रमाहात्म्यं। अत ऊर्द्ध्वं कपिलाख्यानोपाख्यानं यस्यायमाद्यश्लोकः। शौनक उवाच।
सूत माहात्म्यमतुलं गुप्तक्षेत्रस्य सूचितं।
स्थानस्य कापिलस्यापि माहात्म्यं वक्तुमर्हसि॥
शुभमस्तु॥ श्रीसंवत् १८५९॥ शकाब्दा १७२४॥

विषयः। पञ्चतीर्थादिनिरूपणम्। दानप्रशंसादिकथनम्। युगाद्यादिनिरूपणम्। नारद-प्रस्थानप्रतिष्ठादिः। मही-प्रादुर्भावादिकथनम्। कुमारेशमाहात्म्यादिवर्णनम्। तारकविजयादि-वर्णनम्। पञ्चलिङ्गोपाख्यानादिः। भूसंस्थित्यादिनिरूपणम्। वर्करेश्वरमाहात्म्यादिकथनम्। महाकालप्रादुर्भावकथनम्। युगव्यवस्थादिकथनम्। महाकालमाहात्म्यादिकथनम्। भवादित्य-माहात्म्यादिकथनम्। दिव्यवर्णनादिकथनम्। जयादित्यमाहात्म्यादिकथनम्। महाविद्या-साधनादिकथनम्। बर्व्वरीकोपाख्यानादिश्च।

---

**No. 70.** कुलचूड़ामणिः। Substance, country-made paper, $12 \times 2\frac{1}{2}$ inches. Folia, 28. Lines, 6 on a page. Extent, 504 çlokas. Character, Bengali. Date ? Place of deposit, Hálisahar Khásvâṭi Mahádeva Bhattácháryya. Appearance, old. Verse. Incorrect.

**Beginning.** ॐ नमो गणेशाय। भैरव उवाच।

असंख्या त्रिपुरा देवि असंख्याता च कालिका।
वागीश्वरी तथासंख्या तथा तद्वत् कुलाकुला॥
मातङ्गिनी तथा पूर्णा विमला च सुनायिका।
त्रिपुरैकजटा दुर्गा याचान्या कुलसुन्दरी॥
वैष्णवं गाणपत्यञ्च महासौरमतं तथा।
शैवं शङ्करजातञ्च तत्किञ्चित् भूतसम्भवम्॥
चतुःषष्टिञ्च तन्त्राणि मातृका सुनामानि च।
महामाया (सम्भवञ्च) योगिनीयामलसम्भवम् (?)॥
(तद्वदघ्यरक्तन्त्राम) भैरवाष्टकमेव च।
(बहिरूपाष्टकं ज्ञानं) जामलाष्टकमेव च॥ (?)
तन्त्रज्ञानं वासुकिञ्च महासम्मोहनं तथा।
महाशक्तं महादेवं वातुलं वातुलोद्भवं॥
चरणेशं मोहनेशं विशुद्धेश्वरमेव च।
एवमेतानि तन्त्राणि तथान्यदपि कोटिशः॥
श्रुत्वा देवि न कुत्रापि यातामन्द्गासि भैरवि।
तत् कथं वद सुश्रोणि मयि त्वमादवर्णिनि॥
देव्युवाच।
शृणु देव परानन्द परमार्थविशारद।
योगिनीसुक्तकालस्य उपायं कथ्यते मया॥

**End.** भूतशुद्धिं प्राणायामञ्च बीजं षड़ङ्गं विधाय बिल्वपत्रे एतन्मन्त्रं विलिख्य

चट्लोद्भवां युवतीं समानीय तस्या योनौ भगमालां सम्पूज्य तत्र यन्त्रं

संस्थाप्य ध्यायेत् ।

चलज्ज्वलेन्दुसंकाशां तरुणादित्यविग्रहाम् ।

चिन्तयेत् योषितां योनौ चोभयेत् परमेश्वरीम् ॥

इति ध्यात्वा गन्धादिभिरभ्यर्च्य पुनः शक्त्यै दद्यात् ।

किं पुनर्मानसं देवि त्रैलोक्यमपि मोहयेत् ।

प्रकारान्तरमाह । भूतशुद्धिं प्राणायामञ्च विधाय युवतीमस्तके यन्त्रं

संस्थाप्य ध्यायेत् ।

रक्तवस्त्रां स्त्रियं ध्यात्वा त्वदीयमद्वषा ततः ।

तस्या मूर्द्धि स्मरेद्दिव्यां स्रवत्पीयूषवर्षिणीम् ॥

**विषयः।** गुरुनिरूपणम् । स्नानादिनिरूपणम् । कुलदेवतापूजादिनिरूपणम् । कुलाङ्गनादिनिरूपणम् । यन्त्रादिलेखनोपायकथनम् । कुलाचारादिनिरूपणम् । समयाचाररहस्यादिनिरूपणम् । मद्यपानादिविधिः । वेतालादिसिद्धिप्रकारः । कुलाचारसङ्केतनिरूपणम् । प्रयोगादिश्चेति ।

---

**No. 71.** कुलदीपिका । Substance, country-made paper, 15 × 7 inches. Folia, 47. Lines, 10 on a page. Extent, 940 çlokas. Character, Nágara. Date ? Place of deposit, Káçídháma Vindhyeçvarí-prasáda Dube. Appearance, new. Verse. Incorrect.

**Beginning.** ॐ नमो गणेशाय । अथ कुलप्रदीपिका लिख्यते । ॐ परापरायै नमः ।

नमामि प्रथमां देवीं आदिमूर्त्तिं सनातनीम् ।

चिन्मयीं परमानन्दां विज्ञानज्ञानरूपिणीम् ॥

विलोक्य कुलशास्त्रञ्च सम्प्रदायत्रयं मम ।

कौलिकानां हितार्थाय क्रियते कुलदीपिका ॥

अथ सृष्टिक्रमे शक्तिसङ्गमे शिव उवाच ।

रहस्यातिरहस्यञ्च कथ्यते शृणु साम्प्रतम् ॥

आदिनारायणः साक्षात् परं शम्भुः स एव हि ।

**End.** आधारविद्याषट्कञ्च पुनरंस्त्रिविधं क्रमात् ।

मूलविद्या परा चैव रहस्ययोगिनी तथा ॥

शाम्भवीतु हस्तलेखा समयापरबोधिनी ।
कुलपञ्चाचरी पञ्चदशाभ्यर्चा गुणरात्मिका (?) ॥
कौलविद्या तथा प्रोक्ता गुरुक्रमविमर्षिणी ।
समानाख्यादिसङ्केता विद्यानुरागपूर्व्विका ॥
वाग्वादिनी ततः पश्चात् प्रोक्तानुत्तरशाङ्करी।
षोडशी मूर्त्तिविद्या च त्रिमूर्त्तिः पुरसुन्दरी ॥
सप्तविंशतितन्त्राणां मीनकेतुकलात्मिका ।
अध्वरमिदं दिव्यं षडध्वसञ्चितं क्रमात् ॥
अष्टं श्रीपादुका पूर्व्वं चरणान्तं क्रमाद्धत ।

**Colophon.** इति श्रीकुलदीपिका समाप्ता ।

**विषयः।** दशमहाविद्यामन्त्रानुष्ठानादिनिर्णयः ।

---

**No. 72.** कुलपञ्जिका, By महेशः। Substance, country-made paper, 19 x 5 inches. Folia, 533. Lines, 11 on a page. Extent, 27,797 çlokas. Character, Bengali. Date ? Place of deposit, Kolágrám, District Dháká, Çrí Hariçcandra Ghataka. Appearance, new. Generally Prose. Incorrect.

**Beginning.** ॐ नमो गणेशाय । अथ कुलपञ्जिका लिख्यते ।
बालकानां हितार्थाय निर्द्दोषकुलपञ्जिका ।
क्रियते श्रीमहेशेन कुलीनस्योपकारिका ॥
षट्त्रिंशद्दन्दमालोक्य निर्द्दोषस्तत्र वक्ष्यते ।
निर्द्दोष इति पदमिति द्वन्द्वभग्नविषयकः ॥
द्वन्द्वशब्देनात्र मुनिरुच्यते ।
फुलिया खड़दहश्चैव वल्लभोऽथ प्रवीकरः ।
आचारस्तथा ख्यातः सुराइश्चैव च ॥
बाणोऽथ शेखरश्चन्द्रः श्रीविद्याधरकस्तथा ।
राढे वङ्गे समाख्याता निर्द्दोषकुलयूथकाः ॥

इत्यादि । यूथं द्वन्द्वं मेलं इति पर्य्यायः । तम्मेलत्वावच्छिन्नस्य यूथं निर्द्दोषरूपम् । तत्तद् यूथादि प्रकारभेदेन कथ्यते । इत्यादि ।

**End.** राजवल्लभस्य कन्या वं कीर्त्तिनारायण प्रं ततसुतरामजीवनकुलभूषणः स्वस्य

कन्या विं मुं रामसन्तोष प्रं वं धर्म्मनारायण प्रं तत्सुत रामगतिविद्याभूषणः
चस्य चें मुं रामसन्तोषः प्रं तत्सुताः निमचाँद् गोकुल वंशिवदनाः ।

**Colophon.** ( अतःपरं न लिखितं ।)

**विषय:** । वङ्गीयराढ़ीयकुलीनानां वंशावलीकीर्त्तनम् । तेषामाभिजात्यादिकीर्त्तनञ्च ।

---

**No. 73.** कुलसंहिता वा गवराचादि कुलसंहिता । Substance, country-made paper, 12×3 inches. Folia, 30. Lines, 8 on a page. Extent, 768 çlokas. Character, Bengali. Date ? Place of deposit, District Dháká, Vikramapura Májpáḍá Bábu Rásavihárī Ráya. Appearance, old. Verse. Incorrect.

**Beginning.** ॐ नमः परदेवतायै ।

कालीतन्त्रं समालोक्य यामलं भूतडामरम् ।
कुब्जिकातन्त्रराजञ्च खेचरीसाधनं तथा ॥
कालीतन्त्रं वीजतन्त्रं विविच्य परया मुदा ।
कथ्यतेऽतिप्रयत्नेन साधकानां हिताय च ॥
मन्दरस्थं महादेवं भगवन्तं महेश्वरम् ।
पप्रच्छ भक्तिसंयुक्ता प्रेमविह्वलमानसा ॥
सुखःसुखसमासीना विपरीतरतातुरा ।
श्री पार्व्वत्युवाच ।
केनोपायेन देवेश द्रुतं सिद्धिर्भवेन्नृणाम् ।
तन्मे वद दयासिन्धो भक्तानुग्रहकारक ॥
कौलाचारं विशेषेण शवादिसाधनं तथा ।
वदस्व गिरिजानाथ यदि स्नेहोऽस्ति मत्प्रति ॥
इति देव्या वचः श्रुत्वा भगवान् शङ्करोऽब्रवीत् ।
कौलभावोऽतिदुर्ज्ञेयो योगिनामपि सुव्रते ॥
सहस्रवारमद्यापि वारितासि मया प्रिये ।
तथापि तव चापल्यं वारितुं नैवमीश्वरः ॥
तवस्नेहेन भक्त्या च प्रेम्णा च गिरिसम्भवे ।
दासोऽस्मिति वै हलाददुधानितुनिर्म्मलम् ॥
वदामि जगतां मातः शृणु सावहिता प्रिये । इत्यादि ।

**End.**

सुखदं मोक्षदं चैव सर्व्वैश्वर्य्यप्रदायकम् ।
नवरात्र मिदं देवि गोपनीयं त्वया प्रिये ॥
यथा जारो जनन्यास्य यथान्यस्य च सङ्गमः ।
यथा जारो गोपनीयो भर्त्तरि प्राणवल्लभे ॥
तथेदं गोपनीयञ्च न प्रकाश्यं त्वया पुनः ॥

**Colophon.** इति महारहस्ये शिवपार्व्वतीसंवादे नवरात्रादिकुलसंहिता समाप्ता ॥

**विषयः।** अथ कौलधर्म्मनिरूपणम् । अथ साधकलक्षणादिकथनम् । साधिकालक्षणादिकथनम् । कौलानां पूजाक्रमविधानम् । तत्फलादिकथनम् । पञ्चतत्त्वनिरूपणम् । मत्स्यादिशोधनविधिः । बलिदानविधिः । पात्रग्रहणादिविधिः । जपविधिः । तर्पणविधिः । कलौ वीरभावस्य प्राशस्त्यकथनम् । साधनविधिः । तन्नदेशादिनिरूपणम् । कौलानां कर्त्तव्याकर्त्तव्यविधानम् । कौलगुरुलक्षणादिकथनम् । कौलाचाराधिकारनिरूपणम् । गुरुप्रशंसादिकथनम् । कौलरहस्यकथनञ्च ।

---

**No. 74.** कुलसाम्भवी । Substance, country-made paper, 18×4½ inches. Folia, 6. Lines, 7 on a page. Extent, 283 çlokas. Character, Bengali. Date ? Place of deposit, Hálisahar Khásváṭí Mahádeva Bhaṭṭácháryya. Appearance, tolerable. Verse. Generally correct.

**Beginning.**

ॐ श्रीगुरवे नमः ॥
नमामि व्यक्तपुरुषं परं ब्रह्म च सर्व्वदा ।
शब्दस्पर्शरूपरसगन्धाकारविवर्ज्जितम् ॥
साधकानाञ्च सिद्धानां एतद्धेतुञ्च तद्गुरुम् ।
सृष्टिपालनसंहार तत्त्वज्ञे ब्रह्मीयात्मकम् ॥ (?)
प्रथमं सर्व्वलोकानां सर्व्वराज्यसुखप्रदं ।
प्राचीनावस्थनक्षत्रं शिवाकारमनामयम् ॥
कैलासशिखरासीनं देवदेवं जगद्गुरुम् ।
पप्रच्छ परिपृच्छ तथा देवी भूमि ज्ञानं महेश्वर ॥

**End.**

अनुपमं निराकारं निःशब्दः शब्द उच्यते ।
अचलं निर्व्वाणञ्चैव सूक्ष्मस्थापि निरञ्जनम् ॥
वेदान्तसारसर्व्वस्वं त्वयाये निवभाषितम् ।
चिन्तितं सर्व्वयोगानां नाम ज्ञानौ विचारणा ॥

**Colophon.** इति योगशास्त्रे उमामहेश्वरसम्वादे कुलदीपिकायां समाप्ता ।

**विषयः ।** आध्यात्मिकज्ञानसुप्रतीतीर्थादिनिरूपणम् ।

---

**No. 75.** कृष्णकर्णामृतटीका (सारङ्गरङ्गदा) By कृष्णदासः। Substance, country-made paper, 12×5 inches. Folia, 66. Lines, 11 on a page. Extent, 1,188 çlokas. Character, Bengali. Date ? Place of deposit. Váñkurá Kuncekol Bábu Yogíndranátha Siñha Deva. Appearance, old. Prose. Generally correct.

**Beginning.** श्रीश्रीकृष्णाय नमः ।

यद्भावभावितधियोऽत्र वाचां सुप्रापि दुर्गमतमासुनिपुणवानां । (?)

रासोत्सुकं मदनमोहनमच्युतं तं राधासमेधितरसोल्लसितं नतोऽस्मि ॥

कृपासुधासरिद्यस्य विश्वमाप्लावयन्त्यपि ।

नीचगैव सदा भाति तं श्रीचैतन्यमाश्रये ॥

वसन्तौ कृष्णमाधुर्य्यकेलिसौन्दर्य्यसम्पदम् ।

केचिन्न भावना सम्यग् ज्ञेया लीलाशुकस्य गीः ॥

मन्दोऽपि कश्चित् श्रीरूपपदाम्भोजमधुव्रतः ।

कृष्णकर्णामृतव्याख्यां विदधाति यथामति ॥

**End.** अलुब्धे पथि मेऽन्यस्य स्खलत्पदगतेर्मुहुः ।

सकृपायष्टिदानेन सन्तः सन्त्ववलम्बनम् ॥

**Colophon.** श्रीरूपचरणाश्रित कृष्णदासेन निर्म्मिता ।

कृष्णकर्णामृतस्यैषा टीका सारङ्गरङ्गदा ॥

**विषयः ।** कृष्णकर्णामृतनामकस्य काव्यग्रन्थस्य व्याख्यानम् ।

---

**No. 76.** कृष्णनामार्थप्रकाशः । Substance, country-made paper, 12×4½ inches. Folia, 16. Lines, 9 on a page. Extent, 468 çlokas. Character, Bengali. Date, ? Place of deposit, Vishnupura Krishnaganja Çaçibhúshana Gosvámí. Appearance, old. Verse. Generally correct.

**Beginning.** नमः श्रीकृष्णनाम्ने ।

श्रीचैतन्यसुधोद्गीर्णा हरेकृष्णेति वर्णकाः ।

मज्जयन्तो जगत् प्रेम्णि विजयन्तां तदाह्वयाः ॥

कृष्णचैतन्यमद्वैतं नित्यानन्दं सभक्तकम् ।

नत्वा नमोमि तत्प्रीत्यै तन्नामार्थप्रकाशकम् ॥
युगेषु धर्म्मपादानां नियमस्तेषु साधनम् ।
कलौ तु हरिनामैव केवलं गतिरित्यपि ॥
नामिनाम्नोरभिन्नत्वं तस्याद्याधिक्यमित्यपि ।
नाम्नां साधनरूपत्वं सर्व्वसाधनगौरवम् ॥
देशकालादिपात्राणां नियमाभाव इत्यपि ।
बहुजन्मसु गोविन्दसेवासुलभत्वमेव च ॥
सर्व्वार्थसाधनविधिर्निन्दकानाञ्च दूषणम् ।
कृतार्थत्वं तत्पराणां व्यतिरेकेण गर्हणम् ॥

**End.** सहस्रनाम्नां पुण्यानां त्रिरावृत्त्या तु यत् फलम् ।
एकावृत्त्या तु कृष्णस्य नामैकं तत् प्रयच्छति ॥
पद्मपुराणे ॥
तारकं रामनाम स्यात् कृष्णनाम च पावकम् ।
तारकाज्जायते मुक्तिः प्रेम भक्तिश्च पावकात् ॥
युगलनाममाहात्म्यम् । भविष्योत्तरे नारदं प्रति भगवद्वचनम् ॥
मन्नामलक्षजापेन यत्फलं लभते नरः ।
तत्फलं समवाप्नोति राधाकृष्णेति कीर्त्तनात् ॥
कृष्णेति द्व्यक्षरं नाम राधया सह यो वदेत् ।
चाण्डाल इव तस्याहं वसामि हृदि नारद ॥ * ॥

**Colophon.** इति कृष्णनामार्थप्रकाशः समाप्तः ॥ * ॥ श्रीराधाकृष्णाय नमः ॥

**विषयः** । युगेषु धर्म्मपादनियमयुगसाधनादिनिरूपणपुरःसरं हरिनाममाहात्म्यादिनिरूपणम् ॥

---

**No. 77. कृष्णभक्तिप्रकाशः** । Substance, country-made paper, 17 × 3½ inches. Folia, 33. Lines, 9 on a page. Extent, 1,225 çlokas. Character, Bengali. Date, Sk. 1696. Place of deposit, Viṣṇupura District Báñkurá. Babu Rámavallabha Bhaṭṭácáryya. Appearance, old. Prose. Generally correct.

**Beginning.** श्रीकृष्णाय नमः ।
श्रीकृष्णचरणाम्भोजं प्रणम्य परया मुदा ।
नानापुराणवाक्येन तस्य भक्तिः प्रकाश्यते ॥

अज्ञानतिमिरध्वंसी परमार्थप्रकाशकः ।
कृष्णभक्तिप्रकाशोऽस्तु प्रमोदाय सतां सदा ॥
अथ प्रारिप्सितग्रन्थपरिसमाप्तिकारणं श्रीकृष्णनमस्कारं मङ्गलमाचरति श्रीभागवतपद्येन ।
नौमीड्य तेऽभ्रवपुषे तडिदम्बराय
गुञ्जावतंसपरिपिच्छलसन्मुखाय ।
वन्यस्रजे कवलवेत्रविषाणवेणु-
लक्ष्मश्रिये मृदुपदे पशुपाङ्गजाय ॥
तत्रैव ग्रन्थप्रतिपाद्यं श्रीकृष्णभजनरूपं मङ्गलमाचरति । श्रीविष्णुयामल-संहितावचनेन द्वाभ्यां ।
इह खलु सकलपुरुषार्थमर्थ्यमानानामनुपायमनुसरतां श्रीभगवद्भक्तिमेव परमोपायत्वेन ततः पुरुषार्थत्वेन श्रीभागवते परमरहस्यं श्रीवेदव्यास उप-निबबन्ध । ग्रन्थनिरूपणन्तु भक्तिनिरूपणोपकरणमेवेत्याशयेन तत्परश्लोकानां तदर्थप्रतिपादकानाञ्च नानापुराणोक्तश्लोकानां संग्रहेणास्मिन् श्रीकृष्णभक्ति-प्रकाशके ग्रन्थे प्रथममुद्देशक्रमः । तत्र प्रथमकाण्डे श्रीकृष्णभक्तिप्रशंसा । तद्भक्तनिन्दा । श्रीकृष्णभजनम् । सर्व्वकालिकनैयत्यं । अधिकारिनियमा-भावः । भक्तिकारणम् । एतानि प्रकरणानि । द्वितीयकाण्डे निष्काम-भक्तेर्गरीयस्त्वम् । भक्तेर्लक्षणं फलञ्च । गुरुपादाश्रयाद्यङ्गनिरूपणम् । कर्म्माद्यङ्गनिरूपणम् । साधनभक्तिनिरूपणं तत्राधिकारिनिरूपणञ्च । नाना-विधभक्त्यादिषु प्राधान्यकथनम् । श्रवणनिरूपणम् । कीर्त्तननिरू-पणम् । नामापराधाः । तदन्ते तत्क्षमापणम् । स्मरणनिरूपणम् । पादसेवानिरूपणम् । तत्रैवार्च्चननिरूपणम् । तत्रैव सेवापराधाः । तदन्ते तत्क्षमापणम् । वन्दननिरूपणम् । दास्यनिरूपणम् । तत्रैव दासभेदाः । सख्यनिरूपणम् । तत्रैव सखिभेदाः । आत्मनिवेदननिरूपणमित्यादि । यथो-द्देशक्रमे एकैकशः प्रकरणमारभमाणो भक्तिप्रवृत्त्यर्थं श्रीभगवद्भक्तप्रशंसामाह । श्रीभागवते भगवद्दासा एव सर्व्वतः क्षमार्हा इत्याह ।
यन्नामश्रुतिमात्रेण पुमान् भवति निर्म्मलः ।
तस्य तीर्थपदः किम्वा दासानामवशिष्यते ॥
पुमानिति सामान्यपदेन सर्व्वोपकारणम् ॥ इत्यादि ।

**End.** अर्थो हि द्विधा शब्दस्य पण्डितैरुपपद्यते ।
देश्यश्च तत्पदं कैश्चिद्देशः कश्चिन्नमलभाक् ॥

तत्र देवी । यथा यामुनाचार्य्यस्तोत्रे ।

वपुरादयोऽपि केऽपि गुणदोषान् यथाविधि ।

तदयं तव पादपद्मयोरद्यैव(?) मया समर्पितः ॥

दैवो यथा जातिविवेके ।

चिह्नं कुर्य्यात् नरस्यैव विक्रीतस्य यथा पशोः ।

तथ्यार्पणं हरौ देवं विरचेदक्षरत्रयात्(?) ॥

भक्तिरसामृतसिन्धौ ।

दुष्करत्वेन विरले द्वे सख्यात्मनिवेदने ।

केषाञ्चिदेव धीराणां लभेते साधनार्हताम् ।

इति भक्तिरसामृतसिन्धौ ।

शास्त्रो...प्रवृत्तया भक्तमर्य्यादयान्विता ।

वैधी भक्तिरियं कैश्चित् मर्य्यादामार्ग उच्यते ॥

**Colophon.**— इति श्रीकृष्णभक्तिप्रकाशे द्वितीयकाण्डे साधनभक्तिर्नाम पञ्चमप्रकरणं सम्पूर्णम् ॥ हरेकृष्ण ॥

रसाङ्कपक्षिन्दुमितशाके आलेखि कृतिना श्रीहरिरामेण ॥

**विषयः ।** प्रथमकाण्डे—

कृष्णभक्तिप्रशंसा । कृष्णभजनं तदभक्तानां निन्दा च । सार्व्वकालिकनैयत्यकथनं अधिकारिनियमाभावः । भक्तिकारणनिरूपणम् ।

द्वितीयकाण्डे—

निष्कामभक्तेर्गरीयस्त्वकथनम् । भक्तिलक्षणफलादिः । गुरुपादाश्रयाश्रयनिरूपणम् । कर्म्माश्रयनिरूपणम् । साधनभक्तिनिरूपणम् । साधनभक्त्यधिकारिनिरूपणम् । नानाविधभक्त्यादिषु तस्याः प्राधान्यकथनम् । श्रवणकीर्त्तनादिः । नामापराधादिनिरूपणम् । स्मरणपादसेवार्च्चनादिनिरूपणम् । सेवापराधवन्दनदास्यादिनिरूपणम् । दास्यभेदादिकथनम् । सख्यसखिभेदादिनिरूपणम् । आत्मनिवेदनादिष्वेति विस्तरः ।

---

**No. 78. कृष्णयामलतन्त्रम् ।** Substance, palm-leaf, $18 \times 2\frac{1}{2}$ inches. Folia, 73. Lines, 5 on a page. Extent, 1,460 çlokas. Character, Bengali. Date, ? Place of deposit, Usthi, Mayamansiñha. Paṇḍita Navakiçora Bhaṭṭácáryyá. Appearance, old. Verse. Generally correct.

**Beginning.** नमः श्रीकृष्णाय ।

सदाशिव-महाविष्णु-विष्णु-ब्रह्म-शिवादयः ।

यस्यैवांशकलांशस्मै नमः कृष्णाय वेनवे ॥
इत्येवं द्वादश नमस्काराः । ॐ नमो देव्यै सरस्वत्यै दश नमस्काराः ।
एकदा मुनिभिः सार्द्धं व्यासः सत्यवतीसुतः ।
पिबासने वसन् श्रीमान् श्रीमद्बदरिकाश्रमे ॥ इत्यादि ।

**End.** नवकमलदलाक्षं तत्र ......:......
निजचरणसरोजानन्दमत्तं प्रशान्तं ।
सरसमधुरभावा क्लेशनाशाय दीना
निजपतिमतिहीनं प्राह दीनानुरक्ता ॥

**Colophon.** इति कृष्णयामलमहातन्त्रे मुचुकुन्ददर्शने नारदसम्भाषणम् ॥ * ॥ समाप्तश्चायं ग्रन्थः ॥

**विषयः** । व्यासनारदप्रश्नः । शम्भुप्रश्नप्रश्नः । कृष्णरहस्ये शिवप्रश्नप्रश्नः। चाराध्येश्वरनिर्णये ब्रह्मविष्णुप्रश्नः । चाराध्येश्वरनिर्णये विष्णुमहाविष्णुप्रश्नः । वृन्दावनारोहणनिरूपणम् । विद्याधरादिप्रत्यागमनम् । विद्याधरीं प्रति कृष्णस्य शापः । विद्याधरेण सह नारदनिर्याणम् । कृष्णकिङ्करोत्पत्तिः । महालक्ष्म्युपाख्यानादिः । कृतध्वजपितृपुरप्रवेशः । कालयवनभस्मादिकथनम् ।

---

**No. 79.** केदारखण्डः (स्कन्दपुराणीयः) । Substance, country-made paper, $16 \times 4\frac{1}{2}$ inches. Folia, 118. Lines, 9 on a page. Extent, 4,115 çlokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Çyámapukur, Viçvakoṣa Office. Bábu Nagendranátha Vasu. Appearance, fresh. Generally correct.

**Beginning.** ॐ नमः शिवाय ।
यस्याज्ञया जगत्स्रष्टा विरिञ्चिः पालको हरिः ।
संहर्ता कालरुद्राख्यो नमस्तस्मै पिनाकिने ॥
तीर्थानामुत्तमं तीर्थं क्षेत्राणां क्षेत्रमुत्तमम् ।
तत्रैव नैमिषारण्ये शौनकाद्यास्तपोधनाः ॥
दीर्घसत्रं प्रकुर्व्वन्ति ऋषीणां समतेन च ।
तेषां सन्दर्शनौत्सुक्यादागतो हि महातपाः ॥
व्यासशिष्यो महाप्रज्ञो लोमशो नाम नामतः ।
तमागतं वै ददृशुर्मुनयो दीर्घसत्रिणः ॥

उपगम्य युगपत् सर्व्वे सार्द्धवत्साः समुत्सुकाः ।
दत्त्वार्घ्यपाद्यमसकृत् मुनयो वीतकल्मषाः ।
तं पप्रच्छुर्महाभागाः शिवधर्म्मं सुविस्तरम् ॥

मुनय ऊचुः ।

कथयस्व महाप्राज्ञ देवदेवस्य शूलिनः ।
महिमानं महाभाग ध्यानार्च्चनसमन्वितम् ॥ इत्यादि ।

End. श्वपचोऽपि वरिष्ठाः स्युः प्रसादात् पुष्करस्य च ।
तस्मात् सर्व्वप्रयत्नेन पूजनीयो हि शङ्करः ॥
बहूनां जन्मनामन्ते शिवे भक्तिः प्रजायते ।
प्राणिनां क्षतबुद्धीनां जन्मजन्मानि शङ्करः ॥
किं मया बहुनोक्तेन स सेव्यो हि सदा नृभिः ।
पूजनीयः सदा देवो वन्दनीयः सदा शिवः ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
किरातेन कृतं यच्च व्रतं परममद्भुतम् ॥
येनैव भावितं विश्वं जगदेतच्चराचरम् ॥

Colophon. इति स्कन्दपुराणे केदारखण्डे शैवशास्त्रे चेतोपाख्यानं द्वात्रिंशत्तमोऽध्यायः ।
समाप्तोऽयं ग्रन्थः ॥

**विषयः ।** प्रथमाध्याये शिवनाममाहात्म्यादिकथनम् । २ । ३ । ४ । ५ अध्याये दक्षयज्ञादिवर्णनम् । ६ । ७ अध्याये लिङ्गमाहात्म्यादिकथनम् । ८ अध्याये शिवार्च्चनमाहात्म्यादिकथनम् । शिवस्य लिङ्गरूपत्वे कारणनिरूपणञ्च । ९ अध्याये बलाबलप्रसङ्गकथनम् । १० अध्याये शिवस्य जगत्कर्तृत्वादिकथनम् । ११ अध्याये गणाधिपपूजादिनिरूपणम् । १२ अध्याये धन्वन्तर्युत्पत्त्यादिकथनम् । १३ अध्याये देवासुरयुद्धादिवर्णनम् । १४ अध्याये शक्रविजयादिवर्णनम् । १५ अध्याये कर्म्मप्रशंसादिः । कर्म्मफलादिनिरूपणञ्च । १६ अध्याये दधीचोपाख्यानम् । १७ अध्याये वृत्रासुरवधादिकथनम् । १८ । १९ अध्याये बल्युपाख्यानादिः । २० अध्याये पार्व्वत्युत्पत्त्यादिवर्णनम् । २१ अध्याये पार्व्वत्यास्तपस उद्योगादिवर्णनम् । २२ अध्याये पार्व्वत्याः शिवसेवादिवर्णनम् । २३ । २४ । २५ अध्याये शम्भोर्विवाहादिवर्णनम् । २६ । २७ । २८ । २९ अध्याये तारकयुद्धादिवर्णनम् । ३० अध्याये तारकासुरवधादिवर्णनञ्चेति ।

**No. 80.** केरलशास्त्रोक्तसूत्रम्, (सटीकम्) । Substance, country-made paper, 6 × 4 inches. Folia, 40. Lines, 7 on a page. Extent, 245 çlokas. Character, Bengali. Date, ? Place of deposit, Naiháṭi, Paṇḍita Candrakánta Tarkaratna. Appearance, tolerable. Prose and Verse. Incorrect.

**Beginning.** श्रीदुर्गा ॥

सिद्धान्तमौपनिषदं शुद्धान्तं परमेष्ठिनः ।
शोणाधरं महः किञ्चित् वीणाधरमुपास्महे ॥
फलानि नक्षत्रदशाप्रकरणे विवृण्महे ।
वयं पाराशरीं होरामनुसृत्य यथामति ॥

अस्य टीका,—

सिद्धान्तेति किञ्चित् महःस्वरूपं तेजः सरस्वतीति यावत् तस्यापि विशिष्ट-त्वात् उपास्महे भजामः । इत्यादि ॥

**End.** धर्म्मकर्म्माधिनेतारावन्योन्याश्रयसंस्थितौ ।
राजयोगाविति प्रोक्तं विख्यातो विजयी भवेत् ॥ (?)
प्रतिलग्नान् समावीक्ष्य पूर्व्वोदितान् विशेषतः ।
तत्तद्भवस्वरूपाणि क्रमेणैव विवृण्महे ॥

**Colophon.** इति निकषारात्मजीकृतकेरलशास्त्रोक्तसूत्रं समाप्तम् ॥
श्रीदुर्गा । अस्य टीका,—
यथासमाप्तिक्रमेण मेषादीनां फलानि मन्वादिश्लोकैर्वक्ष्यन्ते प्रतिलग्नान् समावीक्ष्य इत्यादि । इति केरलशास्त्रोक्तसूत्रव्याख्या समाप्ता ॥

**विषयः ।** पाराशरीमतानुसारेण नक्षत्रदशाफलनिरूपणमुखेन राजयोगादिनिरूपणम् ॥

---

**No. 81.** केरलिः । Substance, country-made paper, 16 × 1 inches. Folia, 40. Lines, 4 on a page. Extent, 526 çlokas. Character, Bengali. Date, Sk. 1732. Place of deposit, Pañcasár, District Dháká, Paṇḍita Mahendracandra Kávyatírtha. Appearance, tolerable. Prose and Verse. Incorrect.

**Beginning.** ॐ नमः श्रीसूर्य्याय ।

ज्ञानदीपकमादाय वर्णीकृत्य यथाक्षरैः ।

स्वरवेधेन संयुक्तिं वक्तिशानोत्तराधरैः ॥
अ ए क च ठ त प य शा वर्गाः । उक्ताः शुभाशुभाक्षराः । एभिश्च जगत् सर्व्वं ज्ञातुमक्षरैश्चेति । अ ए क च ठ त प य शाः प्रथमवर्गाः । आ ऐ ख छ ठ थ फ र षा द्वितीयवर्गाः । इ ओ ग ज ड द ब ल साः तृतीयवर्गाः । ई औ घ झ ढ ध भ व हाश्चतुर्थवर्गाः । एभि रेवं ++ क्षरैर्ज्ञापनं । इदानीं स्वरभेदा भाष्यन्ते । इत्यादि ।

**End.** प्रथमेन द्वितीयन्तु द्वितीयेन तृतीयकम् ।
उभये पञ्च सङ्ख्यामथवा तृतीयमक्षरम् ॥
एते केरलिना बुद्धा ज्ञातिविशारदैः (?) ॥

**Colophon.** इति गौडारादिज्ञानागमकेरलिः समाप्ता । शकाब्दाः १७११ ।

**विषयः ।** प्रश्नकर्त्तुः प्रश्नाक्षरविशेषपर्य्यालोचनेन तत्तत्प्रश्नोत्तरकथनप्रकारः ॥

---

**No. 82.** कोष्ठीनिर्णयः, By गोपालन्यायपञ्चाननः । Substance, country-made paper, 16 x 3½ inches. Folia, 113. Lines, 5 on a page. Extent, 1,712 çlokas. Character, Bengali. Date, Sk. 1792. Place of deposit, Açujiyá, Mayamansiñha, Bábu Ánandakiçora Ráya. Appearance, fresh. Verse. Incorrect.

**Beginning.** ॐ नमः श्रीसूर्य्याय नमः ।
श्रीकृष्णचरणाम्भोजमकरन्दमधुव्रतः ।
न्यायपञ्चाननो विद्वान् कुरुते कोष्ठीनिर्णयम् ॥
आदित्यादिग्रहाः सर्व्वे नक्षत्राणि च राशयः ।
दीर्घमायुः प्रकुर्व्वन्तु यस्येयं जन्मपत्रिका ॥ इत्यादि ।

**End.** ग्र रा ह मासः ४ । १० दिन ग्रहप्रसादमतुलं श्रीलाभं रौप्यभूषणम् ।

**Colophon.** इति श्रीगोपालन्यायपञ्चाननविरचितायां(?) कोष्ठीनिर्णयो नाम षष्ठो-ऽध्यायः । शाक १७९१ ॥

**विषयः ।** कोष्ठीकरणदर्शनाद्युपायनिरूपणम् ।

---

No. 83. कोष्ठीसारावली, By रामगोविन्दः. Substance, country-made paper, 14×2 inches. Folia, 65. Lines, 8 on a page. Extent, 1,744 çlokas. Character, Bengali. Date ? Place of deposit, Çáktá, via-Koráṇigañja, District Dháká, Paṇḍita Trilocana Tarkálañkára. Appearance, old. Prose and verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

गुरुञ्च ज्ञानदातारं देवीं चेष्टां तथैव च ।
नवग्रहानुगां वाणीं नमामि शिरसा भुवि ॥
सुरान् नमस्कृत्य विलोक्य शास्त्रं
ज्योतिः सदा कोविदरञ्जनीया ।
श्रीरामगोविन्दद्विजेन कोष्ठी-
सारावली चारु वितन्यते वै ॥
न लभ्यं वर्णबोधाय पाठार्थं बालकस्य च ।
ज्योतिःशास्त्रोद्भूतः सारः संक्षेपेण मयोच्यते ॥
आदौ लग्ननिर्णयः ।
रामोऽगवेदे(१ । ४७ ।)ऽङ्गधिसु मिते-(४ । १७)
र्वाणो रसैः (५ । ६) पञ्चखसागरैश्च (५ । ४०) ।
बाणः कुवेदै(५ । ४१)र्विषयोऽङ्कयुग्मैः
(५ । २९ ।) क्रमोत्क्रमाम्मेषतुलादिमानम् ॥
लग्नं दशपलं छिन्नं तत्संख्यं क्रमतः पलम् ।
विपलञ्च रवेर्भोग्यमेवं कल्पनमब्दभे ॥
चतुस्त्रिंशदशीतिश्च शतञ्चैव पुनः शतम् ।
अशीतिञ्च चतुस्त्रिंशत् वृद्धिं वृद्धिं समादिशेत् ॥
मासचादौ दिवाचान्निशाचादौ वर्द्धते दिवा ।
इति लग्नादिनिर्णयः ॥ इत्यादि ।

**End.** चाभिर्दुःखं भवत्तृष्णो धननाशश्च जायते ।
मरणं वातपाद्दादि तद्दिने जायते ध्रुवम् ॥
तस्मिन् दिने च यो रोगो जायते पुरुषस्य च ।
असाध्यः स भवेद्रोगो मृत्युक्लेशादिदायकः ॥

**Colophon.** इति कोष्ठीसारावल्यामुदिताद्दिग्रामायनं समाप्तम् ॥

**विषयः।** अथ प्रथमं लग्ननिर्णयः। ग्रहादिनिरूपणम्। लौकिकसंज्ञाकथनम्। दीप-स्थितिनिरूपणम्। मेषादीनां वर्णकथनम्। यामार्द्धकथनम्। दण्डाधिपकथनम्। राशि-देवतास्वरूपकथनम्। राशीनां क्रूरसौम्यादिविवेकः। मेषादीनां विशेषसंज्ञाः। ग्रहाणां शुभ-नीचत्वकथनम्। मूलत्रिकोणकथनम्। अशुद्धलग्नभिन्नद्रेक्काणकथनम्। सौम्यद्रेक्काणकथनम्। क्षेत्राधिपतिकथनम्। होराकथनम्। नवांशादिनिरूपणम्। पताक्याद्यरिष्टकथनम्। जात-कारिष्टकथनम्। जातपुरुषचक्रकथनम्। तुङ्गादिफलकथनम्। नपुंसकज्ञानकथनम्। गन्ध्या-ज्ञानकथनम्। जारजज्ञानकथनम्। सद्यमरणयोगकथनम्। वैधव्यलक्षणकथनम्। अथ रव्यादिग्रहाणां दृष्टिकथनम्। ग्रहाणां षड्भावविवेचनम्। ग्रहाणां द्वादशभावविवेचनम्। अथ केन्द्रकथनम्। ग्रहाणां नैसर्गिकमित्रत्वकथनम्। ग्रहाणां नैसर्गिकशत्रुत्वकथनम्। तत्काल-मित्रताकथनम्। ग्रहाणां दिग्बलकथनम्। ग्रहाणां बलाबलनिरूपणम्। षड्वर्गकथनम्। क्षेत्रफलकथनम्। होराफलकथनम्। द्रेक्काणकथनम्। नवांशफलकथनम्। द्वादशांशादि-फलकथनम्। नक्षत्राणां देवादिगणकथनम्। अथ राशिफलकथनम्। जन्ममासफलकथनम्। वारफलकथनम्। तिथिनक्षत्रकरणफलकथनम्। तनुधनादिद्वादशस्थानगतग्रहावस्थानफल-कथनम्। ग्रहाणामष्टवर्गफलकथनम्। अथ अपत्यविवेककथनम्। नाक्षत्रिकदशानिरूपणम्। अन्तर्दशाफलकथनम्। वसुदशानिरूपणम्। मास-दिन-अब्ददशानिरूपणम्। योगिनीदशा-कथनम्। अष्टमस्थाने ग्रहस्थित्या मरणं ज्ञातव्यमितिकथनम्। अथ आयुर्दायकथनम्। पञ्च-स्वरकथनम्। वर्षदशादिफलकथनम्। दशान्तर्दशादिनिरूपणञ्च।

---

**No. 84. कौतुकरत्नाकरः।** Substance, country-made paper, $14\frac{1}{2} \times 3\frac{1}{2}$ inches. Folia, 20. Lines, 6 on a page. Extent, 502 çlokas. Character, Bengali. Date ? Place of deposit, Tripurá, Mahárája's Library. Appearance, tolerable. Prose and verse. Generally correct.

**Beginning.** ॐ नमो महादेवाय।

भूतैराक्षद्रवस्त्रासुरसि करहतिं कुर्व्वतीमाननाग्नौ
दन्तैर्दंष्ट्रा रसज्ञां अधमगुरुतया प्रस्खलन्तीं वदन्तीम्।
पश्यैतां दक्षपत्नीमिति सुरसरिता जल्पिते सोपहासं
तां वीक्ष्य स्मेरवक्त्रः सपदि नतशिराः पातु वः पञ्चवक्त्रः॥
इत्यादि।

**End.** नृप एव तत्सम्यग्जानाति इति सरोषं सह्सोत्थाय तथाविधावस्थ एव राजसन्निधौ प्रस्थितः॥

**Colophon.** इत्येतावदस्ति कौतुकरत्नाकरस्य। श्रीहरिः। श्रीरामसुन्दरशर्म्मणः स्वाक्षरमिदं पुस्तकञ्च ॥

**विषयः।** भूलुया-इतिप्रसिद्धराजधानीवास्तव्यस्य गन्धर्व्वमाणिक्यपुत्रस्य लक्ष्मणमाणिक्य-नाम्नः क्ष्मापतेः कवितार्किकापरनामधेयेन पुरोधसा विरचितः प्रहसनविशेषः ॥

---

**No. 85.** कौलावलीनिर्णयः, By ज्ञानानन्दपरमहंसः। Substance, country made paper, 19 × 5 inches. Folia, 37. Lines, 10 on a page. Extent, 1,277 çlokas. Character, Bengali. Date, ? Place of deposit, Májpáḍá, District Dhaká, Babu Rásavihári Ráya. Appearance, new. Verse. Incorrect.

**Beginning.** श्रीगुरवे नमः।

नत्वा श्रीगुरुपादपद्मयुगलं सिद्धैः सदा सेवितं
शाक्तानां परिभावमोक्षजनकं कौलावलीनिर्णयम्।
वक्ष्येऽहं कुलवर्द्धनं सुकृतिभिः सेव्यं सदा कौलिकै
र्भावैरेव मनोहरै + + + + + प्रसादालयम् ॥
प्रातरुत्थाय शिरसि सहस्रदलपङ्कजे।
नवपादित्यकिञ्जल्के विधोर्मण्डलसंयुते ॥
ध्यायन्निजगुरुं धीरो रजताचलसन्निभम्।
वीरासनसमासीनं शुक्लाभरणभूषितम् ॥
शुक्लमाल्याम्बरधरं वरदाभयपाणिकम्।
वामोरुशक्तिसहितं कारुण्येनावलोकितम् ॥
प्रियायाः सव्यहस्तेन धृतचारुकलेवरम्।
वामेनोत्पलधारिण्या रक्ताभरणभूषितम् ॥
ज्ञानानन्दसमायुक्तं स्मरेत् तन्नामपूर्व्वकम्।
मानसैरुपचारैश्च सम्पूज्य कल्पयेत् सुधीः ॥
गन्धं भूम्यात्मकं दद्यात्ाकाशपुष्पं ततः परम्।
धूपं वाय्वात्मकं दद्यात् तेजसा दीपमेव च ॥
नैवेद्यममृतं दद्यात् दद्याच्च मुकुटं तथा।
चामरं पादुके छत्रं तथालङ्कारभूषणम् ॥
तत्तन्मुद्राविधानेन सम्पूज्य वाग्भवं तथा।

यथाशक्ति जपं कृत्वा समर्प्याथ स्तुतिं पठेत् ॥
इत्यादि ।

End. अथ कामकला शक्तिः साधको रत्नमन्दिरे ।
रक्तालङ्कारसंयुक्तो रक्तगन्धानुलेपनः ॥
रक्तवस्त्रो रक्तनेत्रो रक्तकामकलात्मकः ।
रक्तपुष्पैश्च विविधै नैवेद्यै रक्तसन्निभैः ॥
नानोपचारबलिभिः कुङ्कुमादिविलेपनैः ।
मूलादिब्रह्मरन्ध्रान्तु स्फुर + पमरूपिणीम् ॥
बन्धूककुसुमाकारकान्तिभूषितभूषणाम् ।
रक्तकोदण्डपुष्पेषु वरदाभययुक्कराम् ।
उद्दीप्तकान्तिसिन्दूरभूषितां नयनोज्ज्वलाम् ॥

Colophon. इति ज्ञानानन्दपरमहंसविरचिते कौलावलीनिर्णये दशमोल्लासः ॥

**विषयः।** अत्र कौलिकानां प्रातःकृत्यनिरूपणम् । कुलगुरुसंख्यादिकथनम् । कुलद्रव्य-संख्यादिकथनम् । प्रातःकृत्याकरणे दोषकथनम् । स्नानविधिः । सन्ध्याविधिः । तर्पणविधिः । षट्कर्म्मनिरूपणम् । तत्र कर्म्मभेदे वस्त्रभेदकथनम् । पूजास्थाननिरूपणम् । द्वारादिप्रवेशपूजा-विधिः । कूर्म्मचक्रनिरूपणम् । अर्घ्यस्थापनविधिः । आसनादिविधिः । पूजाद्रव्यादिनिरूपणम् । द्रव्यस्थापनस्थानादिकथनम् । फलपुष्पपत्रदानविधिः । पुष्पविवेचनम् । शक्तियुक्तेन पूजा कार्य्येति कथनम् । चक्रमध्ये स्त्रीपुरुषयोरुपवेशनादिव्यवस्था । पूजादौ विजयादिस्वीकारविधिः । विजयादिशोधनविधिः । तत्र अनुपानविधिः । भूतशुद्ध्यादिक्रमकथनम् । अन्तर्यजनविधिः । तत्र दशपुष्पकथनम् । अथ वाह्यपूजाविधिः । तत्र यन्त्रद्रव्यनिरूपणम् । यन्त्रपुष्पनिर्णयः । पञ्चमकारविधिः । पञ्चद्रव्यशुद्धिकथनम् । अर्घ्यपात्रादिविधिः । षोडशोपचारविधिः । शक्ति-विषये धूपनिरूपणम् । दशाङ्गषोडशाङ्गधूपादिविधिः । कुण्डस्थण्डिलादिविधिः । होमद्रव्य-निरूपणम् । अथ त्रिविधपानलक्षणकथनम् । अन्नपूर्णाध्यानादिकथनम् । अन्नपूर्णामन्त्रादि-कथनम् । कौलिकलक्षणादिकथनम् । पानविधिः । सुरादेवीध्यानादिकथनम् । चक्रमध्ये वर्ज्यावर्ज्यकथनम् । ततः शान्तिस्तोत्रम् । तिलकादिविधिः । आत्मसमर्पणविधिः । पर्व्वकृत्य-निरूपणम् । तत्र शक्तिशोधनादिविधिः । स्थानविशेषे पूजायां फलाधिक्यकथनम् । वामाचार-भावेन पूजनीयदेवताकथनम् । पूजाङ्गकथनम् । शिवाबलिप्रकारकथनम् । कुलवारादि-निरूपणम् । नवकन्यानिरूपणम् । कुलाष्टककथनम् । महाष्टककथनम् । शक्तिपूजाप्रकारः । अथ योगिलक्षणादिकथनम् । गुरोरग्रतो निषिद्धकर्म्मकथनम् । गुरुशिष्ययोर्निषिद्धकर्म्मकथ-नम् । शक्तिप्रशंसाकथनम् । अथ भावनिरूपणम् । अथ कामकलाध्यानादिकथनम् । वीरभाव-

कथनम् । तत्र चितासाधनादिविधिः । बलिदानविधिः । वीरसाधनविधिः । शवसाधन-
विधिः । शवलक्षणादिकथनम् । पञ्चमुण्डीसाधनविधिः । अथ पञ्चपुरश्चरणविधिः । अथ
शरत्कालीनपूजायाः कर्त्तव्यताकथनम् । तत्र कुमारीपूजनादिविधिः । समुदाचारविधिः ।
शृगालादिदर्शने नमस्कारविधिः । तन्मन्त्रादिकथनञ्च । वस्त्रपुष्पादिपञ्चपूजाविधिः । काम्यपूजा-
विधिः । रत्नपूजाविधिः । त्रिपुरावीरसाधनविधिश्चेति ॥

---

**No. 86.** क्रमदीपिकावृत्तिः । Substance, country-made paper, Folia, 45. Lines, 6 on a page. Extent, 1,215 çlokas. Character, Bengali. Date, Sk. 1691. Place of deposit, Kánṭhálpáḍá, Post office, Naiháṭí, Paṇḍita Rámatáraṇa Ṭhákura. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।
नमोऽस्तु गुरवे तस्मै केशवाय महात्मने ।
यस्यावतारः सर्व्वेषामपवर्गाप्तिसाधनम् ॥
तत्र तावत् प्रथमतः प्रारिप्सितस्याविघ्नेन परिसमाप्त्यर्थमिष्टलाभाय ग्रन्थकारः
अभीष्टदेवतास्मरणात्मकमाशीर्व्वादलक्षणं मङ्गलमारब्धुं सम्बन्धादिकं सूचयति
प्रथमश्लोकेन तस्य प्रयोजनं निःशेषदुःखनिवृत्तिः । इत्यादि ।

**End.** जगत्सृष्ट्यादिशक्तिमत् निरतिशयप्रकाशानन्दचिद्रूपं परं ज्योतिः यत्
प्रकृतिं विधत्ते स्वेच्छास्वीकृतविराट्रूपाधिष्ठानतया तिष्ठति । तच्चां नौमि
प्रक्षीतत्त्वं (?) करोमि स्वदेहादिसङ्कोचद्वारेण तन्मय एव भवामि ॥

**Colophon.** इति क्रमदीपिकावृत्तावष्टमः पटलः ॥ * ॥ शकाब्दा १६९१ ॥

**विषयः ।** क्रमदीपिकाख्यवैष्णवतन्त्रस्य व्याख्यानम् ॥

---

**No. 87.** क्षेत्रतीर्थवर्णनम्, (स्कन्दपुराणकाशीखण्डीयम्) । Substance, country-made paper, 14×3 inches. Folia, 19. Lines, 6 on a page. Extent, 342 çlokas. Character, Bengali. Date, ? Place of deposit, Yaçodal, District Mayamansiñha, Paṇḍita Kálicandra Bhaṭṭácáryya. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ विश्वेश्वराय नमः । अगस्त्य उवाच ।
एतत् भविष्यं श्रुत्वाहं व्यासस्य शिवनन्दन ।
आश्चर्य्यभाजनं जातस्तीर्थानि कथयाधुना ।

आनन्दकानने यानि यत्र सन्ति चतुरानन ।
तानि लिङ्गस्वरूपाणि समाचक्ष्व ममाग्रतः ॥ इत्यादि ।

**End.** इति नन्दिवचः श्रुत्वा देवो देवीसमायुतः ।
दिव्यं रथं समारुह्य निर्जगाम त्रिपिष्टपात् ॥

**Colophon.** इति स्कन्दपुराणे काशीखण्डे क्षेत्रतीर्थवर्णनं नाम सप्तनवतितमोऽध्यायः ॥

**विषयः ।** काशीस्थिततीर्थनिचयनिरूपणमुखेन तत्तत्तीर्थानां माहात्म्यादिकथनम् ॥

---

**No. 88.** गयापद्धतिः, By रघुनाथभट्टः । Substance, country-made paper. Folia, 19. Lines, 11 on a page. Extent, 440 çlokas. Character, Nágara. Date, Sam. 1886. Place of deposit, Gobardhansarái, Benares, Paṇḍita Vindhy...ríprasáda Dube. Appearance, fresh. Prose and verse. Correct.

**Beginning.** श्रीगणेशाय नमः ।
अथ गयापद्धतिर्लिख्यते ।
गदाधरं प्रणम्याथ विष्ण्वाद्याः परदेवताः ।
रघुनाथो गयाकृत्यं यात्रारम्भादि भाषते ॥
अथ यात्राप्रभृतिसकलगयाकृत्यप्रयोगः । इत्यादि ।

**End.** शास्त्रोपन्याससमासारो(?) रघुनाथेन निर्मितः ।
परानुदेयसन्दोहप्रयोगक्रमसंग्रहः ॥
प्रीयतां पितरस्तेन देवाद्याश्च गदाधरः ।
अन्यथाथ प्रमादः स्तैर्यः कश्चिदिह मे भवेत् ॥

**Colophon.** इति श्रीमत्-माधवात्मजभट्टरघुनाथकृता गयानुष्ठानपद्धतिः सम्पूर्णा । गदाधरार्पणमस्तु संवत् १८८६ मार्गशीर्ष दशावरवौ ग्रन्थसमाप्तिः ॥ शुभं भट्ट आचार्येण लिखितं स्वार्थं परार्थम् ।

**विषयः ।** गयातीर्थे यात्रारम्भमारभ्य तत्र कर्त्तव्यस्य पिण्डदानादिकस्य प्रयोगकथनम् ।

---

**No. 89.** गयाप्रकाशः । Substance, country-made paper, 10×5 inches. Folia, 21. Lines, 12 on a page. Extent, 315 çlokas. Character,

Bengali. Date, ? Place of deposit, Kánṭhálpáḍá, Post office, Naiháṭí. Paṇḍita Rámatáraṇa Ṭhákura. Appearance, old. Prose and verse. Incorrect.

**Beginning.** अस्य प्रथमपदं नास्ति तेन द्वितीयपदस्य प्रारम्भवाक्यं लिखितम् ॥
गयायां पिण्डप्रदानेन यनाद्रिमोचे ?
मोचायितो तीर्थबलप्रभावाद्दीचिषंशं नरकं गतो तो ॥
पितॄन् पितामहांश्चैव तथैव प्रपितामहान् ।
प्रीणयामीति यत्तोयं त्वया दत्तमरिन्दम ।
तेनाखद्युगपद्योगो जातो वाक्येन सत्तम ॥ इत्यादि ।

**End.** आद्यं ईश्वरीकुण्डे चकाराद्रुक्मिणीकुण्डे च आडकर्मः सिद्धो भवतीत्यर्थः । गौरी चेति तत्र महेश्वरकुण्डे सतत्स्नानः पूजनात् सर्व्वसौभाग्यं प्राप्तितो भवतीत्यर्थः ॥

**Colophon.** इति गयाप्रकाशः समाप्तः ॥

**विषयः ।** गयामाहात्म्यादिनिरूपणमुखेन तत्तीर्थकर्त्तव्यकर्म्मविषयनिरूपणम् ।

---

**No. 90.** गीतगोविन्दटीका, (सर्व्वाङ्गसुन्दरी) । Substance, country-made paper, $15 \times 2\frac{1}{2}$ inches. Folia, 65. Lines, 6 on a page. Extent, 1,500 çlokas. Character, Bengali. Date, Sk., 1650. Place of deposit, Kánṭhál pádá *viá* Naiháṭí, Paṇḍita Rámatáraṇa Ṭhákura. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।
प्रणम्य जगतामीशं कृष्णरूपं सनातनम् ।
क्रियते गीतगोविन्दटीका सर्व्वाङ्गसुन्दरी ॥
मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमैर्नक्तं भीरुरयमित्यादि । इत्यादि ।

**End.** किम्भूताः सानन्दा आनन्देन सह वर्त्तमानाः । किं तदित्याह गान्धर्व्वकलासु यत् कौशलं अस्ति यद्विष्णवनुध्यानं यत् शृङ्गे विवेकतत्त्वम् । यत् काव्येषु लीलायितम् । किम्भूतस्य कृष्णैकतानात्मनः । कृष्णश्चासौ एकतानश्चेति कृष्णैकतानं । तदेव आत्मा यस्य एकतानोऽनन्यवृत्तिः ॥

**Colophon.** इति गीतगोविन्दे महाकाव्ये श्रीजयदेवकृतौ सुप्रीतपीताम्बरो नाम द्वादशः सर्गः समाप्तोऽयं ग्रन्थः । शकाब्दा १६५० ।

ख-वाय-ऋतु चन्द्रे च शाके परिमिते मया ।
लिखिता जयदेवस्य टीप्पनीयं प्रयत्नतः ॥
प्रणम्य भारतीं देवीं श्रीनारायणशर्म्मणा ।
लिखिता शब्दशास्त्रस्य सम्मता शोधिता सुरैः ॥
श्रीमाधवाय नमः ।

विषयः । गीतगोविन्दनामकस्य कृष्णलीलाविषयकस्य काव्यस्य व्याख्या ।

---

**No. 91.** गीतगोविन्दप्रबोधः, By रमाकान्तः । Substance, country-made paper, 15 × 3 inches. Folia, 57. Lines, 6 on a page. Extent, 1,617 çlokas. Character, Bengali. Date, ? Place of deposit, Dháká, Paṇḍita Candrakánta Nyáyálaṅkára. Appearance, old. Prose. Incorrect.

**Beginning.** ॐ नमो गणेशाय ।
गोपिकास्तकविधासु राधिका-
भ्रूविभङ्गपरिकम्पिताम्बरः ।
नव्यनीरधररञ्जिताम्बरः
श्यामलो जयति नन्दनन्दनः ॥
प्रणम्य मान्यान् बहुमानपूर्व्वं
मन्यानुपस्थाय कृताञ्जलीकम् ।
श्रीगीतगोविन्दप्रबोधपूर्व्वीं-
देवो रमाकान्त इमञ्चकार ॥
अनेकशः पूर्व्वविचक्षणानां
विस्तारिताः सन्ति यदस्य टीकाः ।
तथापि संक्षेपविशेषहेतो-
र्मम श्रमः सद्भिरयं न वाच्यः ॥
इह खलु नानाविधबुधजनगणसमान-निखिलविघ्नशमनकृष्णानमस्कारकाम-सत्क्रीडाकथनच्छलेन तमेव प्रथमं प्रतिपादयन्नाह मेघैरिति । यमुनाया-स्तीरे राधामाधवयोः रहःकेलयो जयन्ति । रहसि निर्ज्जने सुरते रति-विषये वा केलयो रहःकेलयः । तथाच रहः सुरतगुह्ययोरिति रभसः । रहो गुह्यं यथा स्यात् इति क्रियाविशेषणं वा । इत्यादि ।

**End.** श्रीभोजदेवप्रभवस्य श्रीभोजदेवनामास्य पिता यस्मात् प्रभवस्य जातस्य ।

**Colophon.** इति श्रीगीतगोविन्दप्रबोधे द्वादशसर्गव्याख्या समाप्ता ।

यदत्र पूर्व्वपूर्व्वोषां टिप्पनीनां विरोधिता ।

कृपया मयि तत्सर्व्वं क्षम्यतां सहृदयैः ॥

ममोक्तिरन्यटीकानां संक्षेप एव केवलम् ।

विशेषो यदि चान्योऽस्ति तदा चिन्त्यो मनीषिभिः ॥

क्षतिमः सदसद्विवेचका

भवताम्यां कृपया कृतौ मम ।

स्खलते पथि पिच्छिले मुहुः

स्खलतो दण्ड इवावलम्बनम् ॥

यो जातो वसुधासनगुरोर्गोविन्दपादाम्बुज ( ? )

द्वन्द्वध्यानकराजिराजितहृदः श्रीरामभद्रात् सुतः ।

तेनैवाद्भुतदे सुदेयसुदिता टीका नवीव श्रियः

प्रायः केलिकलाकलानिधिलसत्काव्याब्धिपारप्रदा ॥

न तोय + + + द्विजराज शाके

देवीप्रबोधीयतिथौ नवम्यां ।

श्रीगीतगोविन्दकविलटीका-

मिमां रमाकान्तकृतौ लिलेख ॥

समाप्तोऽयं ग्रन्थः ।

**विषयः** । जयदेवकृतस्य गीतगोविन्दनामकस्य कृष्णलीलावर्णनात्मकस्य काव्यस्य व्याख्यानम् ।

---

**No. 92.** गीतासारः । Substance, country-made paper, $13\frac{1}{2} \times 3\frac{1}{4}$ inches. Folia, 3. Lines, 7 on a page. Extent, 110 çlokas. Character, Bengali. Date, ? Place of deposit, Kálikaccha, Parganá Saráil, District Tripurá, Paṇḍita Kálicandra Nyáyapañcánana. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ नमः कृष्णाय । अथ गीतासारः । अर्ज्जुन उवाच ।

ॐकारस्य च माहात्म्यं रूपं स्थानं स्वरं तथा ।

तत्सर्व्वं श्रोतुमिच्छामि ब्रूहि मे परमेश्वर ॥

श्रीभगवानुवाच ।

साधु पार्थ महाबाहो यन्मे त्वं परिपृच्छसि ॥ इत्यादि ।

**End.** यस्मिन् दर्शनात् सर्व्वं गीता यस्य हृदि स्थिता ।
यत्र तत्र प्रीतो भक्त्या स गच्छेत् परमं पदम् ॥ (?)

**Colophon.** इति श्रीकृष्णार्जुनसम्वादे गीतासारः समाप्तः ॥

**विषयः ।** श्रीकृष्णार्जुनसम्वादच्छलेन ॐकारस्य माहात्म्यकथनाादिनिरूपणम् ॥

---

**No. 93.** गुणप्रकाशः By वर्द्धमानोपाध्यायः । Substance, country-made paper, $15\frac{1}{2} \times 2\frac{1}{2}$ inches. Folia, 79. Lines, 5 on a page. Extent, 2,123 çlokas. Character, Bengali. Date, ? Place of deposit, Dhánuká, Post Office, Pálañ, District Pharidpur, Paṇḍita Haramohana Tarkacúḍámaṇí. Appearance, tolerable. Prose. Generally Correct.

**Beginning.** ॐ नमः शिवाय ।
एकत्र सन्निपतितासितकण्ठबिम्ब-
मन्यत्र चन्द्रकिरणाचितशुभ्रभावं ।
सन्ध्याजलाञ्जलिमनङ्गरिपोर्नमामि
स्वच्छप्रविष्टमिव पुण्यतमं प्रयागम् ॥
नतिवन्नुतेरपि प्रारिप्सितविघ्नविघातकत्वात् तामादौ कर्त्तां निबध्नाति तुष्टे-
रिति । तुष्टिरनुरक्तिरतुष्टिर्द्वेषः तदुभयमपि बन्धनीयमोचनीययोरीश्वर-
विषयकमेव ।
परात्परतरं यान्ति नारायणपरायणाः ।
न ते तत्र गमिष्यन्ति यद्विषन्ति महेश्वरम् ॥ इति श्रुतेः ।
यद्वा मोचनेच्छाबन्धनेच्छे तुष्ट्यतुष्टी ते ईश्वरस्यैव तदिच्छाया एकत्वेऽपि
तत्तत्फलोपधानात् सिसृक्षासंजिहीर्षावदौपाधिको भेदः सहकारिभेद-
समवधानाच्च तस्याः कार्य्यभेदजनकत्वात् तत्र बध्नतः पुनरित्यनेन बन्धस्या-
वश्या मोक्षानन्तरं बन्ध इत्यर्थे विरोधादतुष्टेः पुनरिति योजना । तथाच
व्यवच्छेदार्थः पुनःशब्दो नावृत्त्यर्थ इति गोस्वामिदोषः । यद्वा बध्नतः पुन-
रित्यनेन बन्धस्य निरन्तराद्दष्टिमिषधते न मोक्षानन्तरवेति गोस्वामिदोषः ।
सुखिबन्धौ दुःखसमात्यन्तमच्छेदसहगौ तयोश्च शरीरावच्छेद्यत्वाद्धिषयेव
भोगायतनं शरीरमेव ...................... ।
.................. कारो वधे निवृषे च ...... यत्ने पत्रावपि ।
तुषारशैलेऽपि पुमान् स्त्रियां भक्तिप्रवैचके ॥ इत्यादि ॥

**End.** न च भट्टैरपेक्षाबुद्धेर्द्वित्वाभिव्यञ्जकत्वाकारा दृष्टान्तासिद्धिः अस्माभिरपेक्षा बुद्धेर्द्वित्वादिजनकत्वेन नैव प्राक् ………… एवं घटविषयकबुद्धेः प्राक् च जनकत्वे सिद्धे तद्दृष्टान्तेनापेक्षाबुद्धेरपि विषयकबुद्धेः प्राक् जनकत्वमनु-मेयं । न चात्रानुमानेऽपेक्षाबुद्धित्वस्योपाधित्वात् ननु ज्ञातो घट इति विशिष्टप्रतीतेः …… सम्बन्धः सिद्धोत वर्त्तमाने विषये बाधकाभावात् न अतीतानागतादेः तदभावे …… व्यवहारानापत्तिः तस्य…… अन्यत्वात् । न च ज्ञानविधावेव तद्धीविषयो वर्त्तमानेऽपि तथापत्तेः प्रतीत्योर्विषय-वैलक्षण्यानुभावात् वस्तुतो जानामीति मानसानुव्यवसायगम्यं ज्ञानं प्रत्यक्षं अन्यथा ………… समाश्वासः क्षणिकार्थविशेषगुणत्वाच्च युगपज्ज्ञानस-प्रत्यक्षत्वमनुमेयं अन्यथा परमाण्वादि …… ननु परमाणुवृत्तिः सत्तादिः घटादौ प्रतीयते न तु …… परमाणुवृत्तितया च तद्ग्रहः परमाणोरती-न्द्रियत्वेन तदप्रतीत्यैव न स्यात् न परमाणुघटितसन्निकर्षेण स्वयोग्यता-भावात् सत्तादिः । ( अतःपरं खण्डितम् )

**विषयः ।** रूपादिचतुर्विंशतिसंख्यकानां नैयायिकसम्मतगुणानां यथायथविचारपूर्व्वकं समर्थनम् । "तुष्टेर्मोचयतो बन्धाद्तुष्टेर्बध्नतः पुनः कारागारमिदं विश्वं यस्य नौमि तमीश्वर"-मिति किरणावलीनिर्म्मातुस्तत्रभवत उदयनार्य्यस्य गुणग्रन्थस्य मङ्गलाचरणं अस्मिन्नपि तुष्टेरिति माङ्गलिकश्लोकमारभ्य व्याख्यानात् किरणावल्या उपरि किलेयं टीका ।

---

**No. 94. गुणविवृतिविवेकः**, by **विद्यावागीशः.** Substance, country-made paper, $16 \times 2\frac{1}{2}$ inches. Folia, 157. Lines, 7 on a page. Extent, 5,600 çlokas. Character, Bengali. Date, ? Place of deposit, Barsikurá, Mayamansiñha, Paṇḍita Jayanátha Tarkálañkára. Appearance, very old. Prose. Correct.

**Beginning.** ॐ नमः शिवाय नमः ।

कुञ्चिताधरपुटेन पूरयन् वंशिकां प्रचलदङ्गुलिपंक्तिः ।
मोचयन्निखिलवामलोचनाः पातु कोऽपि नवनीरदच्छविः ॥
श्रीमता मथुरानाथतर्कवागीशधीमता ।
गुणप्रकाश … … … … ॥

प्रारिप्सितग्रन्थसमाप्तिकामनया कृतं भगवन्नमस्काररूपं मङ्गलं शिष्यशिक्षायै आदौ निबध्नाति ॐ नम इति । व्याख्यानमेतदनुमानदीधितिरहस्ये

... ... प्रकाशपत्रिकामवतारयति । विनापीति निरूपणस्य शब्दप्रयोग बाल्यादित्यादिति भावः । इत्यादि ।

**End.** अत आह किञ्चेति अवमत्यधिकारत्वश्चेनैकमतित्वेन: ॥

**Colophon.** इति महामहोपाध्यायश्रीविद्यावागीशभट्टाचार्य्यविरचितो गुणविवृति-विवेकः समाप्तः ।

**विषयः** । मथुरानाथकृतस्य गुणप्रकाशविवृतिनामकस्य गुणप्रकाशव्याख्यानग्रन्थस्य व्याख्या ।

---

**No. 95.** गुप्तवृन्दावनरहस्यम्, by हरिचरणः. Substance, country-made paper, 10 x 4 inches. Folia, 27. Lines, 10 on a page. Extent, 643 çlokas. Character, Bengali. Date, Sk. 1602. Place of deposit, Viṣṇupur, Kriṣṇaganja, Paṇḍita Çacíbhúṣaṇa Gosvámí. Appearance, old. Prose. Incorrect.

**Beginning.** श्रीश्रीकिशोरीकिशोरौ जयतः ॥

प्रणम्य वृन्दावनमध्यमेकतः श्रीमन्मधुव्रतकलिकाकुलात्मा ।
उद्घाटयामि अलतः कठोरं वाग्यस्य गुप्तं हृदि सुस्थितस्य ॥
अये वृन्दारण्य त्वरितमिह गोपोत्सवपराः
परामायुः के वा न किल परमानन्दलहरीं ।
अतो गौरैर्यत्वे स्वयमपि च यो गौरवविधे
र्वैरेख्यं मे चेतस्युपदिश दिशं वा कुरु कृपां ॥
... ... ... ... विचरते
सदा प्रेयाश्यति श्रुतिरपि विरौति स्तुतिरपि ।(?)
इति ज्ञात्वा वृन्दे चरणमभिवन्दे तव कृपां
कुरुष्व क्षिप्रं मे फलतु नितरां तर्षविटपी ॥ इत्यादि ।

**End.** अन्योन्यं रसकेलिकौतुकविधौ सख्यं रसे मग्नतो
प्राप्नोतं रसकोकिलादिविहगैः कस्मिन् स्थले गोत्सवः ।
पायौ पाल्यवनस्थलेन विहसतां परीचाजकृत् (?)
नानारङ्गविहारकौतुकरवे श्रीवृन्दिपेनाब्दिरम् ॥
... ... ... ... ... ... ... ।
इति हरचरीडन्वैरनुचर्य्यादिभिर्नवम् ।
व्याख्यानस्थितयोः सभ्यं कृपयेवागत् यथामति ॥

इत्येवं कथितं साधो नैत्यिकं चरितं तयोः ।
यथामति तथा कुर्य्याद्यथा तत्र गतिर्भवेत् ॥
इति नत्वा गुरुं तत्र पपात दण्डवद्भुवि ।
तथा भवतु मे नित्यमिति विश्वासयाम्यहम् ॥
श्रीमत्श्रीरसिकश्यामनामा श्रीश्रीगुरुर्मम ।
यत्पादाम्भोजमाधुर्य्यं नवं भावयतु तत्तत्त्वम् ॥ (?)
नाम्ना......चरितरत्नः श्रीगुरोः सत्कृपातो
नानातत्त्वप्रकटतरसैः पुस्तकं चात्र चक्रे ।
यच्चण्यास्तेऽप्रकटभजने चित्तवृत्तिर्निगूढे
चित्रायां सपदि रसिका नित्यमालोकयन्तु ॥
... ... ... ... ... ... ।
येषां सश्रीवृन्दविपिनेश्वमाथौ श्यामौ सदा राजत एव चित्ते ॥
चरितरत्नवेऽत्र वृन्दावनसत्रखण्डे च परिच्छेदस्तृतीयः ।
सेवाप्रकाशः प्रथयतु ताम् ॥

**Colophon.** इति श्रीगुप्तवृन्दावनरत्नखण्डे नित्यसेवाप्रकाशस्तृतीयः परिच्छेदः । शुभमस्तु शकाब्दा १६०२ ॥

**विषयः** । वैष्णवशास्त्रं । प्रथमपरिच्छेदे-उत्कलिकावल्लरीनिरूपणं तथा ख्यातप्रकाशादि-निरूपणम् । द्वितीयपरिच्छेदे-स्वभावप्रकाशादिनिरूपणम् । तृतीयपरिच्छेदे-नित्यसेवाप्रकाशादि-निरूपणम् ॥

---

**No. 96.** गुरुपादुकास्तोत्रटीका, by अनन्तरामः. Substance, country-made paper, 18 x $3\frac{1}{2}$ inches. Folia, 5. Lines, 8 on a page. Extent, 215 çlokas. Character, Bengali. Date, ? Place of deposit, Hálisahar, Khásváṭí, Paṇḍita Mahádeva Bhaṭṭácárya. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ गुरवे नमः । अथ गुरुपादुकास्तोत्रटीका द्विजेन रच्यते ।
गुरूपदेशाच पण्डितैः सा प्रदृश्यताम् ।
नत्वा श्रीगुरुचरणाब्जं प्रत्यक्षं शिवरूपिणम् ।
श्रीमदनन्तरामेण शाला चैव गुरोर्मतम् ॥ इत्यादि ।

**End.** कथितत्वात् शेषो नास्ति ।

विषयः। तन्त्रोक्तस्य गुरुपादुकास्तोत्रस्य व्याख्यानम्।

---

No. 97. गुरुपादुकास्तोत्रटीका, by रघुनन्दनन्यायालङ्कारः. Substance, country-made paper, 16 x 3 inches. Folia, 4. Lines, 7 on a page. Extent, 101 çlokas. Character, Bengali. Date, ? Place of deposit, Yaçodala, Mayamansiñha, Paṇḍita Kálicandra Bhaṭṭácáryya. Appearance, old. Prose. Generally correct.

Beginning. ॐ श्रीशिवाय नमः।

नमस्तस्मै भगवते परमात्मस्वरूपिणे।

गुरवे श्रीमते ज्ञानदात्रे सर्व्वार्थदर्शिने॥

सदाशिवपदं ध्यात्वा सत्त्वा वक्ष्ये मुदा। (?)

करोमि पादुकास्तोत्रव्याख्यानं शिवसेवकः॥

End. एतत् वचनानुसारेण चक्राम्नायागमोक्तमन्त्रोपादानवार्थं ये कुर्व्वन्ति तेऽप्यतिशयमन्दबुद्धयः॥

Colophon. इति रघुनन्दनन्यायालङ्कारविरचिता गुरुपादुकास्तोत्रटीका समाप्ता।

विषयः। तन्त्रोक्तस्य गुरुपादुकास्तोत्रस्य व्याख्या।

---

No. 98. गोत्रप्रवरविवेकः। Substance, country-made paper, 15 x 2½ inches. Folia, 2. Lines, 8 on a page. Extent, 44 çlokas. Character, Bengali. Date, ? Place of deposit, Kuṇḍi, Thána Ráṇínagar, District Dháká, Paṇḍita Kálíçaṅkara Vidyálaṅkára. Appearance, tolerable. Prose and verse. Incorrect.

Beginning. ॐ नमो गणेशाय।

अथ गोत्रप्रवरविवेको लिख्यते। तत्र—

जमदग्निर्भरद्वाजो विश्वामित्रात्रिगोतमाः।

वशिष्ठकाश्यपागस्त्या मुनयो गोत्रकारिणः॥

एतेषां यान्यपत्यानि तानि गोत्राणि मन्यते (?)।

एतदुपलक्षणम्। अन्येषामपि दर्शनात्। प्रवरस्तु गोत्रप्रवर्त्तको मुनिः तत्र जमदग्निगोत्रस्य जमदग्न्यौर्व्ववशिष्ठाः। इत्यादि।

End. दत्तात्रेयगोत्रस्य दत्तात्रेय-आङ्गिरस-बार्हस्पत्यप्रवराः॥

Colophon. इति गोत्रप्रवरविवेकः समाप्तः ।

विषयः । जमदग्न्यादिगोत्राणां प्रवराणाञ्च वर्णनम् ।

---

No. 99. गोरक्षसंहिता, by गोरक्षनाथः. Substance, country-made paper, 19 × 4 inches. Folia, 13. Lines, 7 on a page. Extent, 398 çlokas. Character, Bengali. Date, ? Place of deposit, Káṭiháli, *viá* Mayamansiñha, Paṇḍita Viçvanátha Tarkabhúṣaṇa. Appearance, tolerable. Verse. Incorrect.

Beginning. ॐ नमः शिवाय ।

अद्वितीयरूपिणे चिदात्मने सुखस्वरूपिणे ।
यद्देहिभिस्तदादिभिर्निरूपिताय ते नमः ॥
आकृतिर्नियर्य्यासौ भूतले योगशिक्षया ।
समवाप्य परिश्रम्य नैमिषारण्यमागतान् ॥
सुगन्धिनानाकुसुमैः स्वादुसत्फलसंगतैः ।
शाखिभिः शोभितं पुण्यं नानकाननमण्डितम् ॥
स मुनि र्विचरंस्तत्र ददर्शाश्रु नरोत्तमः ।
वेदिकायां समासीनं ध्यायेयं महामुनिम् ॥ इत्यादि ।

End. यस्मादेष श्रोष्यते शीघ्रं तुष्टायेमेतरे जनाः ।(?)
भवतीति वरं नृणां मुक्तिसोपानसंज्ञकम् ।
गुह्याद्गुह्यतरं ह्येतद्गोरक्षेण प्रकाशितम् ॥
नित्यं येन श्रुतमपि तेनाप्य पितरः स्वर्गञ्च नीताः पुन-
र्यश्च ब्रह्मविचारणे क्षणमपि प्राप्नोति धैर्य्यं मनः ।
× × × × × × ×
× × × × × × × ॥

Colophon. इति गोरक्षसंहितायां मुक्तिसोपानं समाप्तम् ।

विषयः । योगकैवल्योपायादिनिरूपणम् ।

---

No. 100. गोविन्दकल्पलता, by गौराचार्य्यः. Substance, country-made paper, 12 × 5 inches. Folia, 68. Lines, 12 on a page. Extent, 2,349 çlokas. Character, Bengali. Date, ? Place of deposit, Viṣṇupur, *viá* Báñkurá, Paṇḍita Rúparáma Bhaṭṭácáryya. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ नमः श्रीकृष्णाय ।

कलयति कलवेणुं मायया मोचयन्तं
चवति मधुरविन्दुं कृष्णगोविन्दगीतम् ।
स्फुटतरवटुनीपैराहतं गोषु गोपी-
जन इति च समाख्यावल्लभं तच्च नत्वा ॥ (?)
समुदितमिदमेतत् पूजनं श्रीमुरारे
र्विधिवदिति पुरा यन्नारदाद्यैर्मुनीन्द्रैः ।
सकलविभवसाध्यैर्धर्म्मकामार्थमोक्षैः
फलति यदि कदाचित्त्यागतो वा कथञ्चित् ॥
जनेषु मर्त्त्येषु विशुद्धकर्म्मसु
श्रीकृष्णमन्त्रं भवसिन्धुपोतम् ।
नत्वा पुनर्व्वच्मि दयाम्बुधेः श्री-
गुरोः पदं कञ्जजपांशुनिर्म्मलम् ॥
गाणपत्यस्तथा शाक्तः शैवः सौरादिकस्तथा ।
विभिन्नफलदाः प्रोक्ताः शत्रु(?) चाक्षीन बान्धवाः ॥
यतीनां ब्रह्मचारिणां वनस्थानाञ्च योषिताम् ।
सर्व्वेषां गृहमेधिनां विष्णुमन्त्राश्च बान्धवाः ॥
असारे घोरसंसारे सारं कृष्णपदार्च्चनम् ।
तत्पदं नार्च्चितं येन पापिना पापकर्म्मणा ॥
तदर्च्चनं प्रवक्ष्यामि यथा शास्त्रविधानतः ।
गुरुतः शास्त्रतः सम्यक् कुर्य्याद्दीक्षां प्रयत्नतः ॥
आदौ दीक्षां प्रकुर्व्वीत सर्व्वार्थसिद्धिहेतवे ॥ इत्यादि ।

**End.** ततश्च कृष्णभूतोऽसौ जायते नान्यथा मुने ।
अन्नं दद्यात् सात्वतेभ्यो यजमानपुरःसरम् ॥
वस्त्राद्यभोज्यैश्च ततो वस्त्रालङ्करणादिभिः ।
एतत्ते कथितं पद्मं सर्व्वपद्योत्तमोत्तमम् ॥
यस्य विज्ञानमात्रेण कृष्णात्मैक्यं समश्नुते ।
न प्रकाश्यमिदं पद्मं न देयं यस्य कस्यचित् ॥
मन्त्राः पराङ्मुखा यान्ति आपदश्च पदे पदे ।
इह लोके च दारिद्र्यं परत्र पशुतां व्रजेत् ॥

चुम्बकाय न दातव्यं परदाररताय च ।
शठाय परशिष्याय नास्तिकाय विशेषतः ॥
स्त्रियां सक्ताय दुष्टाय तथा कामातुराय च ।
विदूषकाय शाक्ताय न प्रकाश्यमिदं शुभम् ॥
शिवद्वेषरतायापि देवद्वेषरताय च ।
विप्रद्वेषपरायापि लिखितं न प्रकाशयेत् ॥
कृपणाय खलायापि भ्रष्टाचाराय निश्चितम् ।
न प्रकाश्यमिदं ग्रन्थं प्रकाश्यं वैष्णवाय च ॥
शाक्तस्थाने न पाठ्येद्(?) दुर्जने न प्रकाशयेत् ।
अनाचाराय विप्राय तथा कोपरताय च ॥
न शूद्राय मतिं दद्याद्ग्रोच्छिष्टं कदाचन ।
इह लोके च दारिद्र्यं परत्र पशुतां व्रजेत् ॥
... मध्ये कालिन्द्यास्तटसन्निधौ ।
एतद्गुह्यं समाख्यातं वैष्णवानां हिताय च ॥

**Colophon.** इति श्रीसमीराचार्य्यविरचितायां गोविन्दकल्पलतायां चयोदशः संग्रहः ॥
समाप्तश्चायं ग्रन्थः ॥

**विषय:** । १ प्रथमसंग्रहे दीक्षादिनिरूपणम् । २ये मन्त्राधिकार्य्यादिनिरूपणम् । अकडम चक्रादिनिरूपणञ्च । ३ये मन्त्रचैतन्यादिनिरूपणम् । ४र्थे मन्त्रसिद्धिलक्षणादिनिरूपणम् । ५मे कृष्णमन्त्राचारादिनिरूपणम् । ६ष्ठे आचारगतमासिकपूजादिनिरूपणम् । ७मे मन्त्र-ऋषि-छन्दः-प्रभृतिनिरूपणम् । ८मे गोपालमन्त्रपरश्चविध्यादिनिरूपणम् । ९मे यजनविधि-प्रयोगादिनिरूपणम् । १०मे पुरश्चरणविध्यादिनिरूपणम् । ११शे मन्त्रप्रभेदादिनिरूपणम् । १२शे कुण्डलक्षणादिकथनम् । १३शे योगमाहात्म्यादिकथनञ्च ।

---

**No. 101.** गोविन्दलीलामृतम्, by रघुनाथदासः. Substance, country-made paper, 12 × 4 inches. Folia, 85. Lines, 8 on a page. Extent, 1,000 çlokas. Character, Bengali. Date, ? Place of deposit, Káñṭhálpáḍá, *viâ* Naihátí, Paṇḍita Rámatáraṇa Ṭhákura. Appearance, very old. Verse. Generally correct.

**Beginning.** श्रीराधामाधवौ जयेताम् ॥
श्रीगोविन्दं व्रजानन्दं सन्दोहानन्दमन्दिरम् ।
तं वन्दे परमानन्दं श्रीराधासङ्गनन्दितम् ॥
योऽज्ञानमत्तं भुवनं कृपालुरुल्लाघयन्नप्यकरोत् प्रमत्तं ।

स्वप्रेमसम्पत्सुधयाद्भुते तं श्रीकृष्णचैतन्यममुं प्रपद्ये ॥ इत्यादि ।

**End.** खण्डितत्वात् शेषो नास्ति । प्रथमसर्गे श्लोकसंख्या ११७ । द्वितीयसर्गे १०७ । तृतीयसर्गे ११० । चतुर्थसर्गे ७८ ।

**विषय:** । कृष्णस्य कुञ्जनिशान्तकेलिवर्णनम् । नस्यविलासवर्णनम् । भोजनकेलिवर्णनम् ।

---

**No. 102.** गौराङ्गविरुदावली, by किशोरिमोहनगोस्वामी. Substance, country-made paper, 13×5 inches. Folia, 35. Lines, 3 on a page. Extent, 360 çlokas. Character, Bengali. Date, ? Place of deposit, Agartalá, Vṛddhanagar, Paṇḍita Mîneçvara Sárbbabhauma. Appearance, tolerable. Verse. Generally correct.

**Beginning.** श्रीगौरचन्द्राय नमः ।

देवैस्तथा श्रुतिगणैर्महिमा न यस्य
प्रज्ञायते प्रभवता भवतापि ... ।
दुर्वाङ्मलीमसमतिर्मनुजः कथं स्यात्
श्रीगौरचन्द्र भवतः स्तवनेऽस्य शक्तिः ॥ इत्यादि ।

**End.** येषां निदेशवशतो विरुदावलीयम्
गौरप्रभोर्विरचिता रघुनन्दनेन ।
गोवर्धनक्षितिभृद्न्तिकवासिनस्ते
गृह्णन्त्विमां कृतकृपाः कृपणे मयाप्ताः ॥

**Colophon.** इति श्रीकलियुगपावनावतारभगवन्नित्यानन्दकुलजलजकलानिधि-श्रीरघु--नन्दनद्वितीयनाम्ना किशोरिमोहनगोस्वामिना कृता गौरविरुदावली ॥

**विषय:** । श्रीगौराङ्गस्य महिमव्यञ्जकानि विशेषणपदानि ।

---

**No. 103.** गौराङ्गशतनाम, by सार्व्वभौमभट्टाचार्य्यः. Substance, country-made paper, 9×4½ inches. Folia, 2. Lines, 12 on a page. Extent, 48 çlokas. Character, Bengali. Date, ? Place of deposit, Agartalá, Vṛddhanagar, Paṇḍita Mínesvara Sárbbabhauma. Appearance, tolerable Verse. Generally correct.

**Beginning.** श्रीगौराङ्गप्रभुर्जयति ।

नमस्कृत्य प्रवक्ष्यामि देवदेवं जगद्गुरुम् ।

मायामहोत्तरशतचैतन्यस्य महात्मनः ।
विश्वम्भरो जितक्रोधः ............ ॥ इत्यादि ।

**End.** विश्वम्भराय गौराय चैतन्याय महात्मने ।
शचीपुत्राय मित्राय लक्ष्मीशाय नमोनमः ॥

**Colophon.** इति श्रीसार्व्वभौमभट्टाचार्य्यविरचितं श्रीचैतन्यदेवस्य शतमहोत्तरनामस्तोत्रं(?) सम्पूर्णम् ॥

**विषयः ।** श्रीगौराङ्गदेवस्याष्टोत्तरशतनाम स्तोत्रम् ।

---

**No. 104.** गौराङ्गस्तोत्रम्, By विराजगोस्वामी. Substance, country-made paper, 16×1½ inches. Folia, 1. Lines, 4 on a page. Extent, 8 çlokas. Character, Bengali. Date, ? Place of deposit, Çāktā, Thānā Kerāniganja, District Dhākā, Paṇdita Trilocana Tarkālaṅkāra. Appearance, old. Verse. Correct.

**Beginning.** ॐ नमो गणेशाय ।
हरिकीर्त्तनमर्त्तनकीर्त्तिभृतं
हरिनामविशेषितदेहधरम् ।
धृतभाग्यशचीसुतभागवतं
भ्रमतेऽपि चरेऽङ्गदकङ्कणम् ॥
तुलसीदलनिर्म्मितमाल्यधरं
हरिणा स्वयतो धृतगौरतनुम् ।
सुरसिन्धुतटे धृतवासरसं
प्रकटीकृतभागवतानुभवम् ॥ इत्यादि ।

**End.** य इदञ्च पठेत् सततादरतो
नहि तस्य कलं तुलनस्य फलम् ।
इह चैव परत्र च मुक्तिपदं
लभते लभते + + चैन समः ॥

**Colophon.** इति श्रीविराजगोस्वामिविनिर्म्मितं श्रीगौराङ्गस्तोत्रं समाप्तम् ॥

**विषयः ।** तुणकचन्दनादिना श्रीगौराङ्गमहाप्रभो रूपादिवर्णनात्मकं स्तोत्रमेतत् ।

---

**No. 105.** गौराङ्गाष्टकालिकम्, By नरहरिसरकारः. Substance, country-made paper, 13×3¼ inches. Folia, 2. Lines, 11 on a page. Extent, 49 çlokas? Character, Bengali. Date, ? Place of deposit, Āgartalā, Vṛddhanagara, Paṇḍita Mīneçvara Sārvvabhauma. Appearance, new. Verse. Generally correct.

**Beginning.** श्रीगौरविधुर्जयति ।

श्रीगौराङ्गमहाप्रभोश्चरणयोर्या केशशेषादिभिः
सेवा-गम्यतया स्वभक्तविहिता सा मे यया लभ्यते ।
तां तन्मानसिकस्मृतिं प्रथयितुं भाव्यां सदा सत्तमैः
स्तौमि प्रात्यहिकं तदीयचरितं श्रीमन्नवद्वीपजम् ॥ इत्यादि ।

**End.** श्रीगौराङ्गविधोः स्वधामनि नवद्वीपेऽष्टकालोद्भवां
भाव्यां भाव्यजनेन गोकुलविधोर्लीलास्मृतेरादितः ।
लीलां योनवेदच दशकं प्रत्यन्वितो यः पठेत् (?)
तं प्रीणाति सदैव यः करुणया तं नौमि ...... ॥

**Colophon.** इति श्रीनरहरिसरकारप्रणीतं श्रीगौराङ्गमहाप्रभोरष्टकालिकं समाप्तम् ।

**विषयः ।** श्रीगौराङ्गस्याष्टकालिकभजनविधानकथनम् ॥

---

**No. 106.** गौरीकञ्चुलिका । Substance, country-made paper, 12×5 inches. Folia, 17. Lines, 9 on a page. Extent, 487 çlokas. Character, Bengali. Date, ? Place of deposit, Çerpur, Mayamansiñha, Bābu Haracandra Caudhuri. Appearance, tolerable. Verse. Incorrect.

**Beginning.** ॐ नमः काल्यै । देव्युवाच ।

श्रुतं भवत्प्रसादेन यथा कालस्य वञ्चनम् ।
मन्त्रस्य सारसम्भूतमिदानीमौषधं वद ॥
येन सिध्यन्ति देवानि सन्ति तानि हितानि च ।
ज्वररोगहरं कोषं तद्वद त्रिपुरान्तक ॥
सन्त्यौषधान्यनेकानि मनुष्याणां हिताय च ।
पूर्ब्बन्तु यत् त्वया प्रोक्तं प्रत्यक्षं कथयस्व मे ॥
ईश्वर उवाच ।
निधिमव्ययनारेष चतुर्भेदैः परिग्रहः ।
सम्मोत्पादनं मन्त्रैः कारयेद्ध चिकित्सकः ॥ इत्यादि ।

**End.** कालस्य रक्षणोपायं त्वयि सत्यं वदाम्यहम् ।
विना मृत्युञ्जयं काशीनाथं गर्भाधिबोधकम् ।
कालस्य निकटं ज्ञात्वा भज काशीं समाश्रितः ॥

**Colophon.** इति गोपालसंहितायां हरगौरीसम्वादे गौरीकञ्चुलिका समाप्ता ॥ • ॥

**विषयः ।** ईश्वरदेवीसम्वादेन औषधादिनिरूपणमौषधकरणकालादिकथनञ्च ॥

---

**No. 107.** ग्रहयागप्रयोगः ( कौमुदीसम्मतः ) । Substance, country-made paper, 12×3 inches. Folia, 13. Lines, 6 on a page. Extent, 175 çlokas. Charater, Bengali. Date, ? Place of deposit, Varsikurā, Mayamansiñha, Bābu Ānandamohana Cakravartī. Appearance, tolerable. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय । अथ कौमुदीसम्मतग्रहयागप्रयोगः । प्रातः कृतनित्य-
क्रियो यजमानो ब्राह्मणद्वयं वाचयेत् । पुण्याहं स्वस्ति ऋद्धिरिति । इत्यादि ।

**End.** धेनुः शङ्खस्तथानड्वान् हेमवासो हयस्तथा ।
कृष्णा गौ र्वायसश्छागो ग्रहाणां दक्षिणा क्रमात् ॥

**Colophon.** इति कौमुदीसम्मतग्रहयागप्रयोगः समाप्तः ॥

**विषयः ।** विरोधिग्रहाणां शान्तै करणीयस्य यागस्य प्रयोगादिनिरूपणम् ।

---

**No. 108.** ग्रहयागप्रयोगतत्त्वम् । Substance, çountry-made paper, 16×3 inches. Folia, 19. Lines, 7 on a page. Extent, 532 çlokas. Character, Bengali. Date, ? Place of deposit, Teliveni, Post Gadbetā, District Medinípura, Appearance, tolerable. Prose. Incorrect.

**Beginning.** ॐ नमः श्रीसूर्याय ॥ अथ ग्रहयागप्रयोगः ।
ध्यात्वा गुरुपदद्वन्द्वं नत्वा च शङ्करात्मजम् ।
ग्रहयागप्रयोगतत्त्वं वक्ति श्रीरघुनन्दनः ॥ (?)
तत्रादौ रविसोमबुधजीवशुक्रेषु वारेषु शोभनाः । चित्रानुराधाश्वगशिरो-
रेवतीपुष्याश्विनीहस्तारोहिणुत्तरात्रयेषु चन्द्रतारानुकूलेषु शुभलग्नेषु कार्य्यः ।
तत्र बाल्यप्रभृतजराधिपप्रबलतरग्रहदुःखरोगाभिभवकृतदुःखपापग्रह-
दोषाद्विनिमित्तकं शान्तिकं मलमासादावपि कर्त्तव्यमिति ।

अपद्दोषैः प्रणीतस्य अस्तु न अपंचते ।
अकालेऽपि च कर्त्तव्यं नात्र कार्य्यविचारणम् ॥ इत्यादि ।

End. ॐ मन्त्रतस्तन्त्रतश्छिद्रं देशकालात् वस्तुतः । (?)
सर्व्वं करोतु निश्छिद्रं नामसङ्कीर्त्तनं हरेः ॥
अज्ञानाद् यदि वा मोहात् प्रच्यवेताध्वरेषु च ।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥
ॐ यदक्षरं परिभ्रष्टं मात्राहीनश्च यद्भवेत् ।
पूर्णं भवतु तत्सर्व्वं श्रीहरेर्नामकीर्त्तनात् ॥
ॐ मया कृतं कर्म्म कीदृशं जातं इति पृच्छेत् । ॐ सर्व्वं साङ्गं जातं सर्व्वं वेदोक्तमासीत् प्रत्युत्तरमिति ॥

Colophon. इति वन्द्यघटीयहरिहरभट्टाचार्य्यात्मजश्रीरघुनन्दनभट्टाचार्य्यविरचितं अश्वयागप्रयोगतत्त्वं समाप्तम् ॥

विषयः । विरोधिग्रहाणां शान्त्यै करणीयस्य अश्वयागस्य विधिः प्रयोगादिश्च ।

---

No. 109. घटकर्परकाव्यटीका । Substance, country-made paper, 18 × 4½ inches. Folia, 3. Lines, 7 on a page. Extent, 102 çlokas. Character, Bengali. Date, ? Place of deposit, Kānihāri, Mayamansiñha, Paṇḍita Mukundacandra Smṛtiratna. Appearance, old. Prose. Correct.

Beginning ॐ नमः शिवाय । निचितमित्यादि । नीरदैर्मेघैः समाकाशमुपेत्य प्राप्य निचितम् । आच्छादितमित्यर्थः । इत्यादि ।

End. घटकर्परेण छिद्रघटेन तस्मै उदकं वहेयं भावानुरक्तेति आद्यौ तृतीयातत्पुरुषे पश्चात् कर्म्मधारयः ॥

Colophon. इति घटकर्परस्य टिप्पनी समाप्ता ।

विषयः । वर्षावर्णनात्मकस्य घटकर्परकविप्रणीतस्य घटकर्परकाव्याख्यस्य क्षुद्रकाव्यस्य व्याख्यानम् ।

---

No. 110. चन्दनधेनुदानतत्त्वम्, By वाचस्पतिमिश्रः. Substance, country-made paper, 18 × 3¾ inches. Folia, 8. Lines, 6 on a page. Extent, 186 çlokas. Character, Bengali. Date, ? Place of deposit, Kāṭihāli, Mayamansiñha, Paṇḍita Navakiçora Tarkacúdāmaṇi. Appearance, tolerable. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय ।
नत्वा शिवं चन्दनचर्च्चिताया
धेनोः प्रदाने सविधिं प्रयोगम् ।
रत्नाकरादेर्लिखितं विलोक्य
तनोति वाचस्पतिरग्रबुद्धिः ॥ इत्यादि ।

**End.** जीवत्पितृकस्य वृषोत्सर्गनिषेधे पतिपुत्रवत्याः प्रथमपसंचारः । सोऽपि तस्याः पुत्रानधिकारमात्रप्रयुक्तवृषोत्सर्गाभावः ॥

**Colophon.** इति वाचस्पतिमिश्रविरचितं चन्दनधेनुदानतत्त्वं समाप्तम् ॥

**विषयः ।** पतिपुत्रवत्या नार्य्या मृतायाः स्वर्गार्थं वृषोत्सर्गनिषेधात् तदनुकल्पीभूतचन्दन-धेनुदानविधिः तत्प्रयोगादिश्च ।

---

**No. 111.** चन्दनधेनूत्सर्गपद्धतिः, By रत्ननाथभट्टाचार्य्यः. Substance, palm-leaf, $16 \times 1\frac{1}{2}$ inches. Folia, 37. Lines, 3 on a page. Extent, 472 çlokas. Character, Bengali. Date, Sk. 1687. Place of deposit, Vişņupura, Kādākuli, District Vāñkurā, Paṇḍita Raghurāma Tarkaratna. Appearance, old. Generally correct.

**Beginning.** ॐ कृष्णाय नमः ।
प्रणम्य पीताम्बरपादपङ्कजं
पिनाकि-पद्मोद्भवसेवितं सदा ।
वितन्यते चन्दनधेनुपद्धतिः
श्रीरत्ननाथेन मुदे सतामियम् ॥
देवलः ।
पतिपुत्रवती नारी म्रियते भर्त्तुरग्रतः ।
चन्दनेनाङ्किता धेनुस्तस्याः स्वर्गाय दीयते ।
अत्र अग्रत इति वचनात् । प्रोषितभर्त्तृकाया वृषोत्सर्गं कुर्य्यादिति केचित् तन्नश्च्यं । यदाह जातूकर्णः ।
चन्दनेनाङ्कितं कृत्वा दद्यात् धेनुं द्विजातये ।
इयं नैवोत्सृजेत्तस्या यावद्भर्त्ता च जीवति ॥ इत्यादि ।

**End.** उदाहरति वेदार्थान् यच्छिष्याः श्रुतैरपि ।
श्रुतिस्मृतिसमापन्नमाचार्य्यं तं प्रचक्षते ॥

इति परिशिष्टवचनाच्छ्राद्धिकर्मार्गायनादिवेदार्थाध्यापकस्य चाचार्य्यत्वम् ।
शूद्राणां तदसम्भवात्तान्त्रिकमन्त्रदातुरेव । तथाच नरसिंहपुराणम् ।
श्रुतिस्मृतिपुराणेभ्यो हीनस्य शूद्रजन्मनः ।
गर्भाधानादिसंस्कारैर्युतस्य च महामुने ॥
इयमेव परा शुद्धिर्दीक्षा या तान्त्रिकी भवेत् ।
यस्माच्च लभते मन्त्रं शूद्रः सेवेत तं सदा ॥
प्राणैरर्थैर्धिया वाचा स एवाचार्य्य उच्यते ।
न मर्त्यबुद्ध्या जानीयाद्विष्णुरूपो गुरुर्मतः ॥

Colophon. इति नवद्वीपीयरत्ननाथभट्टाचार्य्यकृता चन्दनधेनूत्सर्गपद्धतिः समाप्ता ॥
शकाब्दाः १६८१

विषयः । पतिपुत्रवत्या नार्य्या मृतायाः स्वर्गार्थं वृषोत्सर्गनिषेधात् तदनुकल्पीभूतस्य चन्दनधेनूत्सर्गस्य विधिः प्रयोगादिश्च ॥

---

No. 112. चाटुपुष्पाञ्जलिः । Substance, country-made paper, 9×6 inches. Folia, 4. Lines, 5 on a page. Extent, 34 çlokas. Character, Bengali. Date, ? Place of deposit, Tripurā, Mahārāja's Library. Appearnce, tolerable. Verse. Generally correct.

Beginning. श्रीराधिकायै नमः ।
नवगोरोचनागौरीं प्रवरेन्दीवराम्बराम् ।
मणिस्तवकविद्योतिवेणी ............ ॥ इत्यादि ।

End. करुणां मुहुरर्थये परं
तव वृन्दावनचक्रवर्त्तिनि !
अपि केशिरिपोर्यथा भवेत्
स चाटुप्रार्थनभाजनं जनः (?) ॥
इमं वृन्दावनेश्वर्य्या जनो यः पठति स्तवम् ।
चाटुपुष्पाञ्जलिं नाम स स्यादस्याः कृपास्पदः ॥

Colophon. इति चाटुपुष्पाञ्जलिः समाप्ता ।

विषयः । वृन्दावनेश्वर्य्याः स्तवात्मकानि कतिपयानि पद्यानि ।

---

**No. 113.** चिकित्सारत्नम्, By जगन्नाथदत्तः. Substance, country made paper, 16×3 inches. Folia, 101. Lines, 6 on a page. Extent, 2,110 çlokas. Character, Bengali. Date, Sk. 1715. Place of deposit, Dhākā, Bābu Bhagavānacandra Dāsa Kavirāja. Appearance, old. Prose and verse. Incorrect.

**Beginning.** ॐ नमो गणेशाय ।
पञ्चाननाय फणिराजविभूषणाय
स्वर्गापवर्गफलदाय फलात्मकाय ।
गौरीप्रियाय भुवनत्रयवन्दिताय
तेजोमयाय च नमः परमेश्वराय ॥
प्रणम्य गुरुपादाब्जं दृष्ट्वा बहुभिषङ्मतम् ।
श्रीजगन्नाथदत्तेन चिकित्सारत्नमुच्यते ॥
रोगमादौ परीक्षेत ततोऽनन्तरमौषधम् ।
ततः कर्म्म भिषक् पश्चाज्ज्ञानपूर्व्वं समाचरेत् ॥
आसुरी मानुषी दैवी चिकित्सा त्रिविधा स्मृता ।
सूतप्रधाना दैवी स्याच्छेदभेदादिकासुरी ॥
षड्रसा मानुषी प्रोक्ता चोमपूजादिसंस्कृता ।
कलौ चाल्प + + लोके मानुषी तेन पूजिता ॥
वटिका गुड़िका लेहचूर्णारिष्टाश्च पिण्डकाः ।
घृतं तैलं गुड़ो लेपः स्वेदाञ्जनकषायकाः ॥
पुटपाकस्तथा मुख्याभरणो धूमधारणे ।
वक्तव्यानि यथायोग्यान्यनेकानि यथा तथा ॥ इत्यादि ।

**End** निद्राञ्जनमेतद्धि मृडदेवेन भाषितम् ।
माक्षिकं नवनीतञ्च कुष्ठञ्च मधुयष्टिका ॥
सौभाग्यं भगलेपेन दासवच्च भवेत् पतिः ।
निम्बकाष्ठस्य धूपेन धूपयित्वा भगं स्त्रियः ॥
सुभगाः स्युः पतिस्तासां दासवच्च भवेद्ध्रुवम् ।

**Colophon.** इति अञ्जनाधिकारः । इति चिकित्सारत्नं समाप्तम् । शकाब्दाः १७१५ ॥

**विषयः ।** ज्वरादिरोगाणां चिकित्साकथनम् । तत्र दैवी-मानुषी-आसुरी चेति चिकित्सा त्रिविधेति निरूपणम् । अथ सामान्यज्वरचिकित्सा । तत्र षडङ्गजलविधानम् । नाम-

रादिपाचनकथनम् । गुडूच्यादिपाचनकथनम् । अथ वातज्वरे त्रिपुरभैरवरसकथनम् । अथ पित्तज्वरे यवपटोलविधानम् । धान्यशर्कराविधानम् । घनचन्दनादिविधानम् । दाहप्रतिक्रियाविधानम् । ज्वरकेशरिरसकथनम् । शीतभञ्जीरसकथनम् । अथ कफज्वरे कटुफलादिविधानम् । पर्णखण्डेश्वरविधानम् प्रचण्डेश्वररसकथनम् । कफकेतुरसकथनम् । अथ वातपित्तज्वरे नवाङ्गपाचनविधानम् । पञ्चभद्रविधानम् । नवज्वरे अङ्कुशविधानम् । चण्डेश्वररसविधानम् । अथ वातकफज्वरे वालुकास्वेदविधानम् । पञ्चकोलविधानम् । शीतारिरसकथनम् । रसचन्द्रिकाकथनम् । सौभाग्यवटिकाकथनम् । अथ पित्तश्लेष्मज्वरे कण्टकार्य्यादिविधानम् । धान्यपटोलविधानम् । अमृताष्टकविधानम् । चन्द्रशेखररसकथनम् । अथ सन्निपातज्वरे लङ्घनस्वेदनज्वरनिष्ठीवनादिविधानम् । अष्टाङ्गावलेहिकविधानम् । बृहन्नवाङ्गविधानम् । मृत्युञ्जयरसविधानम् । बृहत्पञ्चमूल्यादिविधानम् । दशमूली-चतुर्दशमूल्यादिविधानम् । लक्ष्मीविलासरसकथनम् । वेतालरसकथनम् । भैरवेश्वररसकथनम् । पञ्चवक्त्ररसकथनम् । अथ कर्णशोथे प्रलेपविधानम् । अथ जीर्णज्वरे भार्ग्यादिपाचनविधानम् । मेघनादरसकथनम् । सर्व्वज्वरलौहकथनम् । अथ विषमज्वरे मुस्तकादिपाचनविधानम् । दार्व्यादिपाचनविधानम् । भेदिज्वराङ्कुशकथनम् । ज्वराशनिरसकथनम् । त्रैलोक्यज्वरजिद्रसकथनम् । अर्द्धनारीश्वररसकथनम् । महाज्वराङ्कुशरसकथनम् । बृहत्सर्व्वज्वरलौहकथनम् । अथ कम्पज्वरे शीतमातङ्गसिंहरसकथनम् । विजयायोगकथनम् । अथ धातुस्थज्वरे सुदर्शनचूर्णकथनम् । बृहत्सर्व्वज्वरज्वरलौहकथनम् । अङ्गारकतैलकथनम् । लाक्षादितैलकथनम् । बृहल्लाक्षादितैलकथनम् । अष्टाङ्गधूपकथनम् । अथ चक्रज्वरे दूर्व्वाद्यतैलविधानम् । अथ ज्वरातिसारे ह्रीवेरादिपाचनविधानम् । उशीरपञ्चमूल्यादिपाचनविधानम् । आनन्दभैरवरसकथनम् । कनकसुन्दररसकथनम् । प्राणेश्वररसकथनम् । अथ आमातिसारचिकित्सा । तत्र धान्यपञ्चक-धान्यचतुष्कादिविधिः । अथ पक्वातिसारे कंकटादिविधानम् । मोचादिचूर्ण-मुस्तादिचूर्णस्वल्पपञ्चमूल्यादिविधानम् । कुटजावलेहविधानम् । शिवादिचूर्णकथनम् । गङ्गाधरचूर्णकथनम् । लवङ्गचतुःसमविधानम् । लवङ्गप्रयोगविधानम् । कुटजाष्टकविधानम् । पाठादिचूर्णविधानम् । रसाञ्जनादिचूर्णविधानम् । अथ सर्व्वातिसारे बृहद्गङ्गाभयोगादिकथनम् । अथ प्रवाहिकायां जातिफलाद्यविधानम् । अथ अभयानरसिंहरसकथनम् ।

अथ ग्रहणीरोगचिकित्सा । तत्र कुटजावलेहादिविधानम् । लवङ्गवटिकाविधानम् । गङ्गाधरचूर्णविधानम् । जीरकाद्यचूर्णविधानम् । जातीफलाद्यचूर्णविधानम् । महागन्धकविधानम् । ग्रहणीकपाटरसविधानम् । ग्रहणीगजेन्द्रवटिकाविधानम् । पानीयभक्तवटिकाविधानम् । रसपर्पटीविधानम् । लौहपर्पटीविधानम् । स्वर्णपर्पटीविधानम् । अथ संग्रहग्रहण्यां चाङ्गेरीघृतविधानम् । श्रीलवङ्गादिमोदकविधानम् । जीरकाद्यमोदकविधानम् । ग्रहणीमिहिरतैलविधानम् ।

रोगचिकित्सा। तत्र शूरणमोदकविधानम्। प्राणदागुडिकाविधानम्। कुट-
जम्। अर्शोमण्डूरविधानम्। यवानिकामोदकविधानम्। अथ अजीर्णरोगचि-
ङ्गवटकविधानम्। रामबाणरसकथनम्। बाडवानलरसकथनम्। बृहदग्नि-
म्। महाशङ्खवटिकाकथनम्। सुकुमारमोदककथनम्। हरीतकीखण्डकथनम्।
रोगचिकित्सा। तत्र क्रिमिमुद्गररसकथनम्। कीटवज्ररसकथनम्। क्रिमिघातिनी-
नम्। विडङ्गादिघृतकथनम्। अथ पाण्डुरोगचिकित्सा। तत्र नारायणलौह-
। पुनर्नवामण्डूरविधानम्। पुनर्नवाद्यतैलविधानम्। अथ रक्तपित्तरोगचिकित्सा।
आदिगुडिकाकथनम्। कुष्माण्डखण्डकथनम्। अथ यक्ष्मरोगचिकित्सा। तत्र त्रयोदशाङ्ग-
म्। रास्नादशमूलविधानम्। वासावलेहकथनम्। लाक्षादिमोदकविधानम्। यक्ष्मान्त-
कथनम्। शृङ्गाराभ्रविधानम्। महाकल्पतरुरसकथनम्। मृगाङ्करसकथनम्। बृहच्छ-
घतैलकथनम्। अथ कासरोगचिकित्सा। तत्र समशर्करचूर्णकथनम्। कण्टकार्य्यवलेह-
म्। कासमंहारभैरवकथनम्। चन्द्रामृतरसकथनम्। राजमृगाङ्करसकथनम्। अथ
चिकित्सा। तत्र नस्यविधानम्। पिप्पल्यादिलौहकथनम्। अथ हिक्काश्वासे पुरन्दररस-
धानम्। श्वासकुठाररसकथनम्। अथ स्वरभेदचिकित्सा। तत्र कल्याणावलेहकथनम्।
रसतघृतकथनम्। अथ अरोचकचिकित्सा। तत्र अमृतसुन्दररसकथनम्। अथ छर्दि-
चिकित्सा। तत्र एलादिचूर्णविधानम्। अथ तृष्णाचिकित्सा। अथ मूर्च्छाचिकित्सा। अथ
मदात्ययचिकित्सा। अथ उन्मादचिकित्सा। तत्र कल्याणघृतविधानम्। चीरकल्याणघृतकथनम्।
शिवाघृतकथनम्। शिवातैलविधानम्। अथ अपस्मारचिकित्सा। तत्र गन्धकादिलौहविधानम्।
महाचैतसघृतकथनम्। पाषाणवज्ररसकथनम्। अथ वातरोगचिकित्सा। तत्र रसोन-
पिण्डविधानम्। त्रयोदशाङ्गगुग्गुलुकथनम्। विष्णुतैलकथनम्। मध्यमनारायणतैलकथनम्।
कुब्जप्रसारणीतैलकथनम्। सिद्धार्थकतैलकथनम्। बृहच्छतपुष्पादितैलकथनम्। हिमसागरतैल-
कथनम्। वातारिगुग्गुलुकथनम्। वातकुलान्तकतैलकथनम्। बृहद्वातारितैलकथनम्। छाग-
लाद्यघृतविधानम्। छागादिघृतकथनम्। वातगजाङ्कुशरसकथनम्। महाराजेश्वररसकथनम्।
अथ वातरक्तचिकित्सा। तत्र विविधगुग्गुलुविधानम्। गुडूच्यादिलौहकथनम्। रसमाक्षिक-
विधानम्। द्वादशाङ्गक्वथकथनम्। बृहद्गुडूचीतैलकथनम्। बृहद्गुडूच्यादितैलकथनम्।
अथ ऊरुस्तम्भचिकित्सा। तत्र त्रयोदशाङ्गगुग्गुलुविधानम्। अथ वातरोगचिकित्सा। तत्र
रास्नापाकविधानम्। रास्नापञ्चकविधानम्। योगराजगुग्गुलुकथनम्। बृहद्रसोनपिण्डकथनम्
[illegible]गुग्गुलुकथनम्। आमवातारिगुग्गुलुकथनम्। बृहत्सैन्धवाद्यतैलकथनम्। अथ शूल-
रोगचिकित्सा। तत्र परिणामशूले वैश्वानरलौहकथनम्। पित्ताधिक्ये नारिकेलखण्ड-
विधानम्। गुडाकल्कविधानम्। धात्रीलौहविधानम्। शूलवज्रिणीवटिकाकथनम्। शूल-
गजेन्द्रतैलकथनम्। अथ उदावर्त्तरोगचिकित्सा। तत्र नाराचयोगकथनम्। अथ गुल्मरोग-

**No. 191.** द्वादशयात्राप्रयोगः. By विद्यानिवासः. Substance, country-made paper, $16 \times 2\frac{1}{2}$ inches. Folia, 22. Lines, 5 on a page. Extent, 469 çlokas. Character, Bengali. Date, ? Place of deposit, Vāḍari, Mayamanasiṁha, Paṇḍita Çivacandra Nyāyabhūṣaṇa. Appearance, old. Prose. Generally correct.

**Beginning.** श्रीदुर्गायै नमः ।

ब्रह्मास्वादसहोदरनिर्भररसमाधुरीभाञ्जि ।
विद्यानिवासस्तनुते यात्राकर्माणि सदशो भर्तुः ॥
कोऽत्र विधिनिषेधो नीलमणिर्यथा तथा सेव्यः ।
तदपि विधेरनुगत्या सत्यास्त्वन्दं निराकुर्म्मः ॥
इह खलु भगवद्दर्शनादुपस्थितप्रेमाकलितस्येन्द्रद्युम्ननरपतेर्भक्तियोग स्वो-द्देश्यत इति ब्रह्मविज्ञापितेन प्रतिमारूपिणा भगवता वरप्रदानेन यात्रा प्रवर्त्तिता । इत्यादि ।

**End.** तस्मिन् काले तु ये भक्त्या कृष्णं पश्यन्ति मानवाः ।
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥
विष्णोः स्वरूपमास्थाय विष्णुलोके वसन्ति ते ।
ततः काञ्चनादिदक्षिणां दद्यात् एवमेव महासमद्धा चतुर्द्दशीपर्य्यन्तं श्रीजगन्नाथं पूजयेत् ।

**Colophon.** इति विद्यानिवासोक्तद्वादशयात्राप्रयोगः समाप्तः ॥ * ॥

**विषयः ।** श्रीमज्जगन्नाथदेवस्य द्वादशयात्राप्रयोगादिनिरूपणम् ।

---

**No. 192.** धर्म्मदीपिका. By चन्द्रशेखरः. Substance, country-made paper, $18 \times 5$ inches. Folia, 33. Lines, 8 on a page. Extent, 1,056 çlokas. Character, Bengali. Date, ? Place of deposit, Naihāṭi, District 24-Parganas, Paṇḍita Haraprasāda Çāstri. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

नत्वा शिवपदद्वन्द्वं नानमतानसेवितम् ।
तत्प्रभावर्द्धिताशाभिः क्रियते धर्म्मदीपिका ॥
विद्याभूषणविख्यातः षड्दर्शनमते सुधीः ।
तत्सुतस्तातशो धीमान् ततोऽधीती च तत्सुतः ॥

श्रीचन्द्रशेखरो नाम्ना ख्यातो वाचस्पतिः सुतो ।
सुतीनाञ्च प्रकाशार्थं तनोतीमां प्रदीपिकाम् ॥
तत्र मीमांसातर्क एव वेदतन्मूलकशास्त्रार्थप्रकाशकः । तथाच भट्टमीमांसा-
संज्ञकस्तर्कः सर्व्ववेदसमुद्भवः । सर्व्वेषां वेदानां समुद्भवः प्रकाशो यस्मादिति
विग्रहः । इत्यादि ।

**End.** अशक्यार्थे विध्यसम्भवात् अस्यार्थः अशक्यार्थे असम्भवार्थे विध्यसम्भवात्
विधेरेव प्रवृत्तेः अतो विधेर्य्यासम्भवं विधेयं व्यवस्थापयति । तथाचोक्तम् ।
श्रवादिषु श्रवादीनां व्याकोषस्य च शक्तुषु ।
अर्थापत्तिवशात् तस्माद्व्यवस्थैवेत्यवस्थितिः ॥

**Colophon.** प्रथमपादस्य शेषः ॥ * ॥ श्रीश्रीगुरवे नमः । ॐ हरये नमः ॥ श्रीरामः ॥

**विषयः ।** अत्र प्रथमं विधिनियमपरिसंख्यादीनां यथासम्भवं मीमांसा । ततोऽधिकरण-
निर्वृत्तिः । यत्राधिकरणनिरूपणम् । खादिरन्यायनिरूपणम् । विकल्पनिरूपणम् । कपालाधि-
करणनिरूपणम् । प्रतिनिध्यधिकरणनिरूपणम् । मदादितदन्तन्यायनिरूपणम् । सर्व्वशक्त्यधि-
करणनिरूपणम् । योगसिद्ध्यधिकरणनिरूपणम् । तन्त्रप्रसङ्गन्यायौ । श्रुतशक्त्याधिकरणञ्च ।

---

**No. 193.** धर्म्मविवेकः. By हलायुधः. Substance, country-made paper, 8 x 3 inches. Folia, 3. Lines, 7 on a page. Extent, 36 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Thānā Kerāṇigañja, Sāktāgrāma, Paṇḍita Trilocana Tarkālaṇkāra. Appearance, fresh. Verse. Correct.

**Beginning.** श्रद्धावीजो वेदविप्राम्बुसिक्तः
शाखाविद्यावाचतस्रो दशापि ।
पुण्यान्यर्था द्वे फले मूलस्कन्धे
मोक्षः कामो धर्म्मवृक्षोऽयमीक्ष्यः ॥
यातः श्यामशिलां प्रदाय हरये पातालमूलं बलिः
सत्यप्रख्यविसर्ज्जनात् स च मुनिः स्वर्गं समारोपितः ।
चावाक्यादसतीं सतीं सुरपुरीं कुन्तीं समारोपयत्
सा सीता पतिदेवतामसदृशो धर्म्मस्य सूक्ष्मा गतिः ॥ इत्यादि ।

**End.**

जयन्ति सूरयः सर्व्वे धर्म्मो रक्षति धार्म्मिकम् ।
एतज्ज्ञातव्यमद्यैव किमन्न च भविष्यति ॥
जयोऽस्तु पाण्डुपुत्राणां येषां पक्षे जनार्द्दनः ।
यतः कृष्णस्ततो धर्म्मो यतो धर्म्मस्ततो जयः ॥

**Colophon.** इति महाकविवल्लभाय्युधविरचितं धर्म्मविवेकाख्यकाव्यं समाप्तम् ॥

**विषयः ।** कतिपयप्रश्नपूरणश्लोककथनम् ।

---

**No. 194.** धर्म्मेतिहासः. Substance, country-made paper, 16 × 3 inches. Folia, 115. Lines, 6 on a page. Extent, 2,932 çlokas. Character, Bengali. Date, ? Place of deposit, Mayamanasiṁha, Serapura, Paṇḍita Candrakānta Tarkālaṅkāra. Appearance, old. Prose. Correct.

**Beginning.**

ॐ नमो गणेशाय ।
नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥
एकदा ब्राह्मणः कश्चित् पुत्रदारादिपोषणे ।
वयो गतमभिज्ञाय चिन्तामाप दुरत्ययाम् ॥
धर्म्मो हि परमो बन्धुः परलोकसुखावहः ।
श्रुतः कदाचित् साधुभ्यामिति गाथा सनातनी ॥
स मया न श्रुतो धर्म्मो न कृतो नानुचिन्तितः ।
अधुना स्वल्पमेवायुरवशिष्टं हि मे मतम् ॥
इति चिन्ताकुलो विप्रो धर्म्मशुश्रूषणे रतः ।
चलितः पुत्रशिष्याभ्यां ... ... सदैव सः ॥
सूतं गत्वा महात्मानं विनयानतकन्धरः ।
कृताञ्जलिपुटः सम्यक् प्रोवाच सूतमोत्तमम् ॥ इत्यादि ।

**End.**

चत्वारश्च पाण्डवास्ते वै दृष्टा भवसमुद्भवाः ।
केवलं गर्भदुःखाय ये गङ्गां न गता नराः ॥
गङ्गामाहात्म्यमेतद्धि यः पठेत् विष्णुसन्निधौ ।
सभायां वापि विप्रेन्द्राः शृणुयाद्वापि भक्तितः ॥
गङ्गास्नानफलं प्राप्य सुखभोगैकसन्निधिः ।
चिरायुः पुत्रपौत्रैश्च ततो दिवमवाप्नुयात् ॥

द्विजा ऊचुः ।
धर्म्मेतिहासस्य कथा विचित्रा
मया श्रुतास्मन्मुखपङ्कजाद् गुरो ।
तामाशिषं सम्प्रत्यनघं देव
यया स्वरामो हि यथाच कुर्म्महे ॥
उपनयतु मङ्गलं वः सकलजगन्मङ्गलालयः श्रीमान् ।
दिनकरविबोधितनवकमलिनविभेक्षणो विष्णुः ॥ ॐ ॥

**Colophon.** इति श्रीपद्मपुराणोद्धृते धर्म्मेतिहासे सप्तविंशतितमोऽध्यायः ॥ ॐ ॥ समाप्तश्चायं ग्रन्थः ॥

**विषयः ।** पितृपूजा पतिसेवा सर्व्वजनेषु समता ।
मित्राद्रोहो विष्णुभक्तिश्च एते पञ्च महामखाः ॥

इत्यादिनिरूपणमुखेन एतदनुष्ठानफलनिरूपणम् । पतिव्रताद्युपाख्यानप्रदर्शनेन च माहात्म्योपाख्यानम् । तडागखननादिफलनिरूपणम् । वृक्षादिरोपणपुण्यनिरूपणम् । अश्वत्थादिवृक्षच्छेदनदोषकथनम् । गोप्रचारदानपुण्यनिरूपणम् । विष्णुप्रासादादिदानफलकथनम् । गङ्गामाहात्म्यकथनम् । गङ्गास्वरूपविवेचनम् । गङ्गाधारणमन्त्रनिरूपणम् । धात्रीफलमाहात्म्यादिकथनम् । तुलसीमाहात्म्यकथनम् । गङ्गास्नानमाहात्म्यादिनिरूपणञ्च ।

---

**No. 195.** धातुघोषा वा धातुसाधनम्. By रामकान्तः. Substance, country made paper, $12 \times 2\frac{1}{2}$ inches. Folia, 48. Lines, 8 on a page. Extent, 1,392 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Thānā Kerāniganja, Sāktāgrāma, Paṇḍita Trilocana Tarkālaṃkāra. Appearance, fresh. Prose. Incorrect.

**Beginning.** ॐ नमो गणेशाय ।
नत्वा गुरुपदद्वन्द्वं रामकान्तेन यत्नतः ।
बालानामवबोधाय क्रियते धातुसाधनम् ॥
अथ धातवः । यद्यपि बहवो धातवस्तथापि ग्रन्थगौरवभयात् झटिति सर्व्वधातुसाधनानुसन्धानबोधनकलाय दशगणता दर्शिताच निबध्यते ॥
यदुक्तं वृद्धैः ।
भू-स्था-मन-हनोऽस्ति दा-कृ-श्रा-ग्रह-चिन्तयः ।
दशैते पुरतो ज्ञेया शीघ्रज्ञानाय धातवः ॥ इति ।

तथादौ भूधातुरच्यते । भूसत्तायामिति सत्तार्थे वर्त्तमानस्य भूशब्दस्य क्रियाभावो धातुरिति धातुसंज्ञायां पश्चात् त्यादिप्रत्ययः । एवमेव सर्व्वत्रानुसन्धेयं । सम्प्रत्यर्थे वर्त्तमाना भवति भवतः भवन्ति । भवसि भवथः भवथ । भवामि भवावः भवामः ॥ इत्यादि ।

**End.** यङ् लुग्वा सर्व्वस्मादजादेरोरिति रत्नमालाव्याकरणसूत्रञ्च । तथा लुगधिकारे यङो वक्तव्यमिति चान्द्रः । तथा सर्व्वकर्मणापि चर्करीतब्राह्मणे + + चितान्तादित्यत्रान्यत्रयणमुपात्तं । तेन बोभवीतीत्यादिसिद्धम् ॥

**Colophon.** इति धातुघोषा समाप्ता ।

**विषयः ।** भू-स्था-गम इत्यादि दा कृ-ग्रा-पच-चिन्तिरूपद्वादशधातूनामाख्यातशब्दयोः सर्व्वत्र रूपकथनम् । तत्र तत्र धात्वर्थादिविवेचनञ्च ।

---

**No. 196.** धातुमाला. By कुमरनन्दी. Substance, country made paper, 14 × 3 inches Folia, 13. Lines, 6 on a page. Extent, 273 çlokas. Character, Bengali. Date, Sana, 1293, Sāla. Place of deposit, Parganā Vagḍi, Teliveni, District Medinīpura, Paṇḍita Candranātha Cūḍāmaṇi. Appearance, new. Verse. Generally correct.

**Beginning.** ॐ नमः शिवाय ॥

धातौ शब्दसमुच्छ्रितौ धात्वा वैकल्यमागते ।
क्रियते तस्य शुद्ध्यर्थं यत्नो कुमरनन्दिना ॥
भ्वादादि जुहोत्यादि दिवादिः स्वादिरेव च ।
तुदादिश्च रुधादिश्च तनक्र्यादिचुरादयः ॥

भू सत्तायां । अथ तवर्गान्ताः । चिती संज्ञाने चत सातत्यगमने च्युतिर् आसेचने । इत्यादि ।

**End.** चड् खिड् चुड् चुषि हिंसायां शठ श्वठ गतिसंस्कारयोः शुठ आलस्ये शुठि-शोधने चठ् मुड् उपघाते जुड् प्रेरणे तड् भंशे वड् उपवेशायां नड् आघाते परस्मैपदिनः ॥ चुरादयः समाप्ता ॥

**Colophon.** समाप्ता चेयं धातुमाला सन १२९३ साल ॥

**विषयः ।** भ्वादिदशगणीयधातूनामर्थकथनं तेषामनुबन्धादिकथनञ्च ।

---

**No. 197.** धातुमाला. By महेशः. Substance, country-made paper, 12×2 inches. Folia, 14. Lines, 5 on a page. Extent, 184 çlokas. Character, Bengali. Date, ? Place of deposit, Vākuḍā Viṣṇupura, Paṇḍita Candranārāyaṇa Bhaṭṭācāryya. Appearance, tolerable. Prose. Incorrect.

**Beginning.** ॐ नमः शिवाय ।

राधाकृष्णं नमस्कृत्य महेशदेवशर्म्मणा ।

लिख्यते धातुमाला च श्रीदुर्गायाः प्रसादतः ॥

अथ भ्वादिगणि-लट्प्रकरण धातवः संक्षेपेण लिख्यते । भू सत्तायां भूधातुः परस्मैपदी । भवति भवतः भवन्ति ।

**End.** अविशतत्वात् शेषो नास्ति ।

**विषयः।** अर्थनिरूपणमुखेन धातूनां रूपनिरूपणम् ।

---

**No. 198.** धातुमाला. By षष्ठीदासविशारदः. Substance, country-made paper, 12×3 inches. Folia, 24. Lines, 7 on a page. Extent, 504 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamanasiṁha, Serapura, Paṇḍita Durgāsundara Kṛtiratna. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

अज्ञानध्वान्तसंहन्त्रीं भारतीमिन्दुसन्निभाम् ।

गुरुञ्च ज्ञानदं भक्त्या प्रणमामि पुनः पुनः ॥

मनोरमादिमालोक्य धातुटीकां गुणाधिकाम् ।

करोमि धातुमिमालां शिशूनां कण्ठभूषणम् ॥

भुवाद्यदादिकाराद्यो दिवादिः स्वादिकस्ततः ।

तुदादिश्च रुधः प्रोक्तो तुदादिस्तदनन्तरम् ॥

तनादिकतनादिश्च क्रियादिः चुरादिकः ।

एते दश गणा ज्ञेया अत्र कातन्त्रसम्मताः ॥ इत्यादि ।

**End.** चुरादौ धातवो ये तु चुरादा अपि ये मताः ।

परस्मै वचने तेषां प्रयोगः परिकीर्त्तितः ॥

एतत् संक्षेपतः प्रोक्तं ग्रन्थविस्तारभीतितः ।
अन्येऽनेकगणस्था ये विज्ञेयास्ते प्रयोगतः ॥
मध्यमखाः समीपस्थो जाह्नवीचेखसन्निधौ ।
गोपालपुरेऽजोऽकार्षीत् धातुमालां विशारदः ॥

**Colophon.** इति वैदिककायस्थकुलतिलकश्रीगोपाल-भट्टात्मज-श्रीषष्ठिदासविशारदविरचिता धातुमाला समाप्ता ॥ * ॥

**विषयः ।** भ्वाद्यदादिप्रभृतिधातुनिकराणां विशदार्थनिरूपणम् ।

---

**No. 199.** धातुलक्षणम्. By दत्तोकाचार्य्यः. Substance, country-made paper, 13 × 3 inches. Folia, 33. Lines, 5 on a page. Extent, 1,100 çlokas. Character, Bengali. Date, ? Place of deposit, District Tripurā, Vidyākūṭa, Paṇḍita Jagadbandhu Bhaṭṭācāryya, Appearance, old. Verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।
शिवं प्रणम्य बोधाय बालानां स्मृतये सताम् ।
आचार्य्य-श्रीदत्तोकेन क्रियते धातुलक्षणम् ॥
भू-स्था गम-दृशो ... ... क्ष-श्रा-पच-चिन्मयः । इत्यादि ।

**End.** अखिलत्रीणत्वात् समाप्तिसूचकं वाक्यं नास्ति ।

**विषयः ।** भ्वादिदशगणीयधातूनामर्थकथनम् ।

---

**No. 200.** धातुसंग्रहः. Substance, country-made paper, 18 × 3½ inches. Folia, 11. Lines, 9 on a page. Extent, 396 çlokas. Character, Bengali. Date, ? Place of deposit, Parganā Vagḍi, Teliveni, District Medinipura, Paṇḍita Candranātha Cūḍāmaṇi. Appearance, fresh. Verse. Correct.

**Beginning.** ॐ नमः शिवाय ॥
केन च शास्त्रमात्रानां निर्मलबोधाय चाशुतोषाय ।
संग्रह इह धातूनां विधीयते प्रयोगसम्भाजाम् ॥
भू सत्तायां पा पाने श्रा गन्धोपादाने ध्मा शब्दाग्निसंयोगयोः ष्ठा गति-निवृत्तौ । इत्यादि ।

**End.** भाज पृथक्करणे सभाज प्रीतिसेवनयोः परस्मैपदिनः प्लुर वीर विक्रान्तौ स्थूल परिवृंहणे आत्मनेपदिनः इति स्मृतादि ।

**Colophon.** इति चुरादिगणीयाः ॥ समाप्तश्चायं संग्रहीतः प्रयुक्तधातुगणः ॥

**विषयः ।** धातूनामर्थकथनं तेषामनुबन्धादिनिरूपणेनात्मनेपदादिविवेचनञ्च ।

---

**No. 201.** नाडीप्रकाशः. (कणादसंहितायाम्) Substance, country-made paper, 16×3 inches. Folia, 8. Lines, 6 on a page. Extent, 144 çlokas. Character, Bengali. Date, ? Place of deposit, Mayamanasiṁha, Serapura, Bābu Haracandra Caudhurī. Appearance, tolerable. Verse. Generally correct.

**Beginning.** नमः शङ्कराय ।

पद्मास्येभ्यः पञ्चसंख्यागतेभ्यो
वेदा जाता ऋग्यजुःसामभेदाः ।
अथर्व्ववेदश्चायुर्व्वेदश्च तस्मि-
न्नास्ते शम्भो श्रीकणादस्य भक्तिः ॥
आस्ते वेदः पञ्चमो वैद्यकाख्यो
वेत्ता कश्चित् तस्य नास्ते मदेशात् ।
तस्माज्ज्ञानाख्येन तस्माद्गुराणात्
तस्माज्ज्ञात्वा वच्मि सर्व्वाभि शास्त्रम् ॥
प्रथमे नाडिकाज्ञानं द्वितीये रोगनिश्चयः ।
तृतीये च कषायः स्यात् चतुर्थे पारदादिकर्म्म ॥
पञ्चमे तु मन्त्रविद्या रसजारणमारणम् ।
यस्य प्रभावाद्रोगाश्च नश्यन्ति सर्व्व मूलतः ॥ इत्यादि ।

**End.** भग्ननाशो (?) न जीवेच्च वातश्लेष्मो न जीवति ।
वक्राकृतिस्थिरनेत्रो न जीवेद्विकलेन्द्रियः ॥
इत्युक्तं नाडिकाज्ञानं निदानं कथ्यतेऽधुना ॥ ... ॥ * ॥

**Colophon.** इति कणादसंहितायां नाडीप्रकाशः समाप्तः ॥ श्रीदुर्गाचरणे भक्तिरास्ताम् ॥

**विषयः ।** नाडीज्ञानमुखेन रोगादिनिरूपणम् ।

---

**No. 202.** **निकुञ्जरहस्यम् .** Substance, country-made paper, $12\frac{1}{2} \times 5$ inches. Folia, 3. Lines, 11 on a page. Extent, 78 çlokas. Character, Bengali. Date, ? Place of deposit, Tripurā, Mahārāja's Library. Appearance, tolerable. Verse. Generally correct.

**Beginning.** श्रीराधाकृष्णाभ्यां नमः ।

द्रुतकनकसुगौरस्निग्धमेघौघनीला

... ... रचितहृदारयसुन्दरापयन्तो ।

यदुतनवदुकूले नीलपीते दधानौ

स्मर निभृतनिकुञ्जे राधिकाकृष्णचन्द्रौ ॥ इत्यादि ।

**End** परमरसरहस्यानन्द ... ... इन्दा-

विपिन-नवनिकुञ्जे दिव्यदिव्यैविलासैः ।

निरवधि रममाणौ राधिकाकृष्णचन्द्रौ

भज सकलमुपेक्ष्य ... ... ... ... ॥

स्तवमिममतिरम्यं राधिकाकृष्णचन्द्र-

प्रमदरसविलासैरद्भुतं भावयुक्तम् ।

पठति य इह ... ... मनसचित्तो

विजनमनु स राधाकृष्णयोः सख्यं लभेत ॥

**Colophon.** इति श्रीनिकुञ्जरहस्यस्तोत्रं सम्पूर्णम् ॥

**विषयः ।** निकुञ्जे रममाणयोः श्रीकृष्णराधिकयोः स्तुतिः ॥

---

**No 203.** **निगमतत्त्वसारः .** Substance, foolscap paper, $8 \times 3$ inches. Folia, 12. Lines, 10 on a page. Extent, 297 çlokas. Character, Nāgara. Date, ? Place of deposit, Ḍhākā, Ramanā's Kālimatha. Appearance, new. Verse. Correct.

**Beginning.** श्रीगणेशाय नमः ।

कैलासशिखरे रम्ये नानारत्नविभूषिते ।

आनन्दभैरवो देवः पप्रच्छानन्दभैरवीम् ॥

श्रीआनन्दभैरव उवाच ।

निगमागमशास्त्राणि मया त्वयि प्रकाशितम् ।

तेषां मध्ये सारभूतं वद कान्ते कुलेश्वरि ॥

पुरा श्रीत्वन्मुखाम्भोजात् श्रुतं बहुविधं मया ।
श्रीबड़यामलाख्यञ्च तथायोगारतन्त्रकम् ॥
शक्तियामलमाख्यातं तथान्यद्विस्तरं प्रिये ।
योगसारं तत्त्वसारं तथा गुह्यं वदस्व मे ॥ इत्यादि ।

**End.** आनन्दभैरव उवाच ।
एतदद्भुतमाख्यातं त्वन्मुखात् संश्रुतं मया ।
अद्य प्रभृति देवेशि तव दासो भवाम्यहम् ॥

**Colophon.** इति निगमतत्त्वसारे एकादशः पटलः ॥ समाप्तोऽयं ग्रन्थः ।

**विषय:** । शिवया सह शिवसंवादेन योगसारतत्त्वसारयोर्निरूपणम् । तत्र पञ्चतत्त्व-माहात्म्यादिकथनम् । पञ्चतत्त्वादिशुद्धिविधिः । योगविधिः । मन्त्रादिसाधनविधिः । स्तोत्रादि-शोधनविधिः । कवचविधिः । चण्डीपाठक्रमः । मद्यमांसादिशोधनविधिः । भस्मिदाकल्प-कथनम् । अशक्तानां पञ्चतत्त्वविधिविशेषकथनञ्च ।

---

**No. 204. निगमलता.** Substance, country-made paper, 19 × 5 inches. Folia, 34. Lines, 6 on a page. Extent, 637 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Vikramapura, Mājhapāḍā, Bābu Rāsavihāri Rāya. Appearance, new. Verse. Incorrect

**Beginning.** ॐ नमः परदेवतायै ।
कैलासपर्व्वते रम्ये यामावन्ते च शर्व्वरी (?) ।
धृत्वा तु चरणौ देव्या भगवान् शङ्करोऽब्रवीत् ॥
श्रीशङ्कर उवाच ।
मातर्दुर्गे महामाये कृपां कुरु दयामयि ।
हृदि शूलं समुत्पत्य बाधि मां पद्मलोचने ॥
श्रूयतां शुभगे देवि यच्छूलं वर्त्तते हृदि ।
तन्मया कथितं भद्रे यथा ज्ञात्वा न मुह्यति ॥
तव वक्त्रे श्रुतं पूर्व्वं भगवत्या त्वमेव च ।
वाक्येनाज्ञापनं नैव कथं कुर्य्याद्दुभगेश्वरी ॥
इदं चैकं द्वितीयञ्च वरदाती कथञ्चन ।
ब्रतीयं परमेशानि जीवन्नैव मतिर्न च ॥

जीवच्छिते यदा शम्भोर्गमनं केन वा कृतम् ।
इति चिन्तापरो भूत्वा वात्तुलोऽभूत् संशयः ॥
श्रीपार्व्वत्युवाच ।
नाचं वद्यामि खलु पामरेषु रतिं त्यजामि पशुवादिनेषु । (?)
वाचं त्यजामि कुलकर्म्मघातिने सर्व्वं त्यजामि किल चम्पकेषु ॥
श्रीशङ्कर उवाच ।
देवि विश्वेश्वरि त्वं हि सृष्टिस्थित्यन्तकारिके ।
कथं मां पशुरूपेण स्थापितासि रतिप्रिये ॥
श्रीपार्व्वत्युवाच ।
पुरा कोचवधुसङ्गाद्वीराचारं भवान् कृतः ।
तथापि पशुभावत्वं न मुञ्चति कथञ्चन ॥ इत्यादि ।

End. निगमं मत्कुलं नाथ कृतार्थं निश्चितं प्रभो ।
इति ज्ञात्वा चावच्छिता न प्रकाश्यं कदाचन ॥
यः पाति पुस्तिकामेतां गृहे रक्षति नित्यशः ।
तस्य स्थाने स्थिरं बद्धा सर्व्वदा त्वत्पुरे यथा ॥
पटलं वा तदर्द्धं वा तदर्द्धं वा महेश्वर ।
जानाति स गुरुः साक्षात्मत्समस्तत्समोऽपि वा ॥

Colophon. इति निगमकल्पतायां पार्व्वतीश्वरसंवादे चतुर्विंशतिः पटलः । सम्पूर्णोऽयं ग्रन्थः ॥

विषयः । शङ्करं प्रति शङ्कर्य्याः उक्तिरूपोऽयं प्रबन्धः । तत्र पञ्चमकारेषु प्राधान्यतः पञ्चममकारस्यैव प्रपञ्चशः प्रयोगादिविधिः । कृतसाधनविधिः । दिव्यवीरादीनां लक्षणादिकथनम् । पञ्चममकारसाधनेनैव मोक्षप्राप्तिकथनम् । भैरवीचक्रे प्रवर्त्तमाने वर्णभेदराहित्यादिकथनम् । पञ्चमकारशोधनादिविधिः । पुनः पुनः पानविधिः । योनिपूजाविधिः । तत्र ध्यानादिकथनञ्च । अथ कालिकापूजाविधिः । तारापूजाविधानम् । उग्रताराविधानकथनम् । अभिषेकविधिकथनञ्च ।

---

**No. 205.** नित्यानन्दाष्टकम् . By श्रीवृन्दावनदासगोस्वामी. Substance, country-made paper, 10 × 4½ inches. Folia, 3. Lines, 4 on a page. Extent, 24 çlokas. Character, Bengali. Date, ? Place of deposit, Agartalā, Vṛddhanagara, Tripurā, Paṇḍita Mineçvara Sārbbabhauma. Appearance, new. Verse. Generally correct.

**Beginning.** श्रीनित्यानन्दाय नमः ।

शरच्चन्द्रभ्रान्तिं स्फुरदमलकान्तिं गजपतिं
हरिप्रेमोन्मत्तं धृतपरमसत्त्वं स्मितमुखम् ।
सदाघूर्णन्नेत्रं करकलितवेत्रं कलिभिदं
भजे नित्यानन्दं भजनतरुकन्दं निरवधि ॥ इत्यादि ।

**End.** ... ... ... ... ... ...
... ... ... ... ... ... ॥
परं नित्यानन्दाष्टकमिदमपूर्व्वं पठति य-
स्तदंघ्रिद्वन्द्वाब्जं स्फुरति नितरां तस्य हृदये ॥

**Colophon.** इति श्रीनित्यानन्दाष्टकं श्रीकृष्णदासगोस्वामिविरचितं सम्पूर्णम् ॥

**विषयः ।** अष्टभिः श्लोकैर्नित्यानन्दस्य स्तवकथनम् ।

---

**No. 206.** **निबन्धतन्त्रम् .** Substance, country-made paper, 18 x 5 inches. Folia, 26. Lines, 8 on a page. Extent, 750 çlokas. Character, Bengali. Date, ? Place of deposit, District Dhākā, Vikramapura, Mājhapāḍā, Bābu Rāsavihāri Rāya. Appearance, new. Verse. Correct.

**Beginning.** ॐ नमो जगन्मोहिन्यै ।

श्रीदेव्युवाच ।

सिद्धिविद्या पुरा प्रोक्ता मन्त्रयन्त्रादिकानि च ।
नानाभावप्रभेदेन संशयो जायते प्रभो ॥
भावभेदेन कथय लोकनिस्तारकारक ।
सर्व्वेषां शरणं तन्त्रं सिद्धान्तविज्ञसम्मतम् ॥
आसामाराधना केन भावेन परिजायते ।
आसां वः प्रकृतिः कापि तत्र वा कीदृशी क्रिया ॥
तत् प्रकाशय सम्यक् मे येन यामि निवृत्तरम् ।

श्रीशिव उवाच ।

सर्व्वासां सिद्धिविद्यानां प्रकृतिर्द्विविधा प्रिये ।
दिव्यो वीरो वरारोहे विभ्रमेद्विविधां शुभाम् ॥
दिव्यो वीरश्च देवेशि कालीकुलं विचिन्तयेत् ।
श्रीकुलञ्च विभिन्नैर्वैविचिन्तयेत् सुरसुन्दरि ।

काली तारा भद्रकाली भुवना महिषमर्द्दिनी ।
त्रिपुटा त्वरिता दुर्गा विद्या प्रतिशिवा प्रिये ॥
कालीकुलं समाख्यातं श्रीकुलञ्च ततः परम् ।
सुन्दरी भैरवी बाला बगला कमला तथा ॥
धूमावती च मातङ्गी विद्या स्वप्नावती प्रिये ।
मधुमती महाविद्या श्रीकुलं परिभाषितम् ॥
लतायां पूजयेत् कालीं नीले नीलसरस्वतीम् । इत्यादि ॥

End. काली तारा तथा छिन्ना मातङ्गी भुवनेश्वरी ।
अन्नपूर्णा तथा दुर्गा महिषासुरमर्द्दिनी ॥
त्वरिता त्रिपुरा भद्रे भैरवी बगला तथा ।
त्रिपुटा च तथा नित्या कमला च सरस्वती ॥
जयदुर्गा तथा भद्रे तारा त्रिपुरसुन्दरी ।
अष्टादश महाविद्यास्तन्त्रादौ कथिताः प्रिये ॥
नात्र कालविशुद्धिः स्यात् समयासमयादिकम् ।
न वारतिथिनक्षत्रं न योगः करणन्तथा ॥

Colophon. इति निरुत्तरतन्त्रे देवीश्वरसंवादे पञ्चमः पटलः ॥

**विषयः ।** शिवाशिवयोः संवादेन भावभेदनिरूपणम् । कालीकुलकथनम् । श्रीकुलकथनम् । पञ्चाम्नायनिरूपणम् । कालीपूजायां गुरुमन्त्रादिनिरूपणम् । कलानिरूपणं दक्षिणकालिकामन्त्रतज्ज्ञानपूजादिविधिः । महाकालध्यानकथनम् । कुल्लुकादिनिरूपणं कालीस्तवकथनम् । कालीकवचकथनम् । अजपानिरूपणम् । अथ पुरश्चरणविधिः । दिव्यवीरपशुभावभेदात् पुरश्चरणप्रकारभेदकीर्त्तनम् । प्राणायामविधिः । निर्गुणसगुणभावचिन्तविधिः । रात्रौ पूजाविधिः । महानिशादिनिरूपणम् । अथ वीराभिषेकविधिः । तत्र अभिषेकमन्त्रादिकथनम् । सिद्धमन्त्रलक्षणम् । शक्तिसाधनं विना निर्व्वाणाभावकथनम् । मात्रादि-पञ्चकन्याव्याख्यानम् । शक्तिचक्रादिलक्षणकथनम् । पञ्चचक्रविधिः । कुसुमानुकल्पादिकथनम् । चक्रे वर्ज्जनीयकथनम् । गोप्यकर्म्मकथनम् । राजचक्रे देवचक्रे च विशेषकथनम् । योनिनां साधनादिविधिः । साधिकालक्षणादिकथनम् । कुलाचारादिसाधनकथनम् । विद्याविशेषे शक्तिविशेषविधानम् । अथ वेश्यालक्षणादिकथनम् । पञ्चद्रव्यनिरूपणम् । तेषां शुद्धिकथनम् । नवकन्यानिरूपणम् । तर्पणे मुद्रादिविधिः । पञ्चीकरणविधिः । अष्टादशमहाविद्याकीर्त्तनञ्च ।

---

**No. 207.** निर्णयसिन्धुः. By कमलाकरभट्टः. Substance, country-made paper, 15×7 inches. Folia, 270. Lines, 13 on a page. Extent, 104,364 çlokas. Character, Bengali. Date, Sk. 1772. Place of deposit, Kātihāli, District, Mayamanasiṁha, Paṇḍita Navakiçora Tarkacūḍāmaṇi. Appearance, fresh. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय । श्रीरामाय नमः । श्रीकृष्णाय नमो नमः ।

कारुण्यैकनिकेतनं रामं सीतालताशोभितम् ।
विश्वामित्राध्वरायत्तसीमालम्बनशाखिनं वन्दे ॥
लक्ष्मीसहायं कल्पद्रुतलावर्जितगोकुलम् ।
बर्हापीडं घनश्यामं मनः किञ्चिदुपास्महे ॥
देवार्थधर्म्मरक्षार्थे मायामानुषरूपिणम् ।
पितामहं हरिं वन्दे भट्टनारायणाह्वयम् ॥
यत्पादसंस्थितिः सर्व्वमङ्गलप्रतिभूर्मता ।
तान् भट्टरामकृष्णाख्यान् श्रीतातचरणान्नुमः ॥
सर्व्वकल्याणसन्दोहनिदानं यत्पदद्वयम् ।
उमदीमोदरीमम्बामम्बाख्यां नौमि सादरम् ॥
बिन्दुमाधवपादाब्जरोलम्बीकृतविग्रहम् ।
ज्यायांसं भ्रातरं भट्टदिवाकरमुपास्महे ॥
हेमाद्रिमाधवमते प्रविचार्य्य सम्य-
गालोक्य तत्त्वमथ तीर्थकृतं परेषाम् ।
श्रीरामकृष्णतनयः कमलाकराख्यः
काले यथामति विनिर्णयमातनोति ॥
सन्ति यद्यपि विद्वांसस्तन्निबन्धाश्च कोटिशः ।
तथाप्यमुष्य वैदग्धीं केचिद्विज्ञातुमीशते ॥
तत्र संक्षेपतः कालः षोढ़ाब्दोऽयनमृतुर्मासः पक्षो दिवस इति । तत्राब्दो माधवमते पञ्चधा सावनः सौरश्चान्द्रो नाक्षत्रो बार्हस्पत्य इति । इत्यादि ।

**End.** प्रेतक्रियैकोद्दिष्टनिषेधेऽपि भिन्ने पुनस्तद्द्युपवासमाब्दिकपरं तेन तत् पार्व्वणमेव । विद्ध्यिमो द्वादशनारायणबलिः तद्विधिरन्यत्र विशेषः प्रागुक्त इत्यलं बहुना ॥

एवं निरूपितमिदं गहनन्तु धर्म्म-
तत्त्वं विचार्य्य बचनैस्तुलयेः सुसम्यक् ।

तदोषदर्शिनपचाय विवेचनीयं
विद्वद्भिरित्यवरतं प्रयतोऽस्मि तेभ्यः ॥ * ॥

**Colophon.** समाप्तोऽयं निर्णयसिन्धुरिति शक १७०१ ।

**विषयः ।** प्रयागस्नानादिविधिः । कमलसूर्यादिदानविधिः । संक्रान्तिविचारः । सप्तमीस्नानदानादिविधिः । मघामाघीयोगादिकथनम् । कोजिकापौर्णमास्यादिकृत्यनिरूपणम् । रजोदर्शनतिथिरात्र्यादिफलनिरूपणम् । इन्द्रसिंहासनादिपूजानिरूपणम् । शमीदृष्ट्यादिपूजानिरूपणम् । कोजागरलक्ष्मीपूजनादिनिरूपणम् । कार्त्तिकप्रातःस्नानाकाशप्रदीपोत्सर्गादिविधिः । चातुर्मास्यव्रतसमाप्तिबोधनादिविधिः । धनुःसंक्रमणपुण्यकालादिनिरूपणम् । अर्द्धोदययोगादिनिरूपणम् । माघस्नानविधिर्माघे मूलकभक्षणादिनिषेधः । विष्णुपवित्रारोपणादिविधिः । हयग्रीवोत्सवादिनिरूपणम् । शक्रध्वजारोपणादिविधिः । वामनपूजादिविधिः । महालयापार्वणादिश्राद्धविधिः । कपिलषष्ठीकृत्यादिविधिः । गजच्छायादिकथनम् । देवीपूजाचण्डीपाठादिविधिः । वैशाखशुक्लचतुर्दश्यां नृसिंहव्रतादिनिरूपणम् । सेतुबन्धरामेश्वरपूजादिनिरूपणम् । कोकिलाव्रतादिनिरूपणम् । मासविचारादिनिरूपणम् । व्रतारम्भकालादिनिरूपणम् । ग्रहणादिनिरूपणम् । लौकिकस्नानादिविधिः । अभिषेकविधिः । गर्भाधानादिसंस्काराभावदोषकथनम् । सीमन्तोन्नयादिसंस्कारकर्म्मनिरूपणम् । विवाहादिविधिः । देवप्रतिष्ठादिविधिः । सदसच्छूद्राणां व्यवस्था । शिवयुक्तमासापामहयपूजनादिनिषेधः । होमादिनिरूपणम् । श्राद्धादिनिरूपणम् । क्रयविक्रयादिनिरूपणम् ।

---

**No. 208. निर्व्वाणतन्त्रम् .** Substance, country-made paper, $12 \times 2\frac{1}{2}$ inches. Folia, 18. Lines, 8 on a page. Extent, 432 çlokas. Character, Bengali. Date, ? Place of deposit, Hālisahara Khāsvāṭī, Mahādeva Bhaṭṭācāryya. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ नमः परमदेवतायै ।
कैलासपर्व्वते रम्ये नानारत्नोपशोभिते ।
विपरीतरतासक्ता चण्डी पप्रच्छ शङ्करम् ॥
श्रीचण्डिकोवाच ।
निराकारं निर्गुणञ्च स्तुतिनिन्दाविवर्जितम् ।
स्तुतित्यं सर्व्वकर्त्तारं वर्णातीतं गुणिषकम् ॥
संज्ञादिरहितं शान्तं निराकारं प्रतिष्ठितम् ।
तस्मादुत्पत्तिर्देवेश निराकारेष जायते ॥ इत्यादि ।

**End.**

यदि भक्तियुतो मर्त्यो मनसा चिन्तयन् सदा ।
ते नरा नहि गच्छन्ति कदाचिद्यम मन्दिरे ॥
इति ते कथितं तत्त्वं वैष्णवस्य सुरेश्वरि ।
यज्ज्ञानादमरत्वञ्च लभ्यते नात्र संशयः ॥

**Colophon.** इति नीतिनिर्व्वाणतन्त्रे विष्णोः स्तोत्रकथनं नाम [illegible] पटलः ॥

**विषयः ।** मन्त्रनिरूपणम् । मन्त्राद्युत्पत्तिनिरूपणम् । नराणां जन्ममृत्य्वादिनिरूपणम् । गायत्रीनिरूपणम् । गायत्रीमाहात्म्यनिरूपणम् । षडङ्गन्यासमन्त्रादिनिरूपणम् । पुरश्चरण-लक्षणनिरूपणम् । होमाचरणनिरूपणम् । सत्यादिलोकनिरूपणम् । विष्णुस्तवकथनञ्च ।

---

**No. 209.** नीतिसारः, (गारुडीयः). Substance, country-made paper, 12½×3 inches. Folia, 13. Lines, 7 on a page. Extent, 366 çlokas. Character, Bengali. Date, Śk. 1[illegible]36. Place of deposit, Brāmhaṇamaṇḍali *vid* Bārāsāt, Paṇḍita Rāmanārāyaṇa Bhaṭṭācāryya. Appearance, old. Verse. Generally correct.

**Beginning.**

ॐ नमो गणेशाय । अथ नीतिसारः ।
उत्तमैः सह साङ्गत्यं पण्डितैः सह सत्कथाम् ।
अलुब्धैः सह मित्रत्वं कुर्व्वाणो नावसीदति ॥
परवादं परद्रव्यं परिहासं परस्त्रिया ।
परवेश्मनिवासञ्च न कुर्व्वीत कदाचन ॥ इत्यादि ।

**End.**

स्पष्टे चाभ्यन्तरे द्रव्यं लग्नवैव तु दृश्यते ।
अथैवं वरणीयञ्च विद्या न ह्रियते परैः ॥ ० ॥

**Colophon.** इति गारुडीयनीतिसारः समाप्तः ॥ ० ॥

**विषयः ।** नीतिविषयोपदेशकाः कतिपयश्लोकाः ।

---

**No. 210.** नीलकण्ठस्तवराजः. Substance, country-made paper, 16×3 inches. Folia, 6. Lines, 6 on a page. Extent, 108 çlokas. Character, Bengali. Date, ? Place of deposit, Kāṭihāli, District Mayamanasiṁha, Paṇḍita Jagaccandra Smṛtipañcānana. Appearance, old. Verse. Correct.

Beginning. ॐ नमो गणेशाय ।
विद्युद्वरत्नांशुविभूषिताङ्गी
शिलातले हेममये सुरम्ये ।
सुखोपविष्टं नटनाट्यनाथं
जगाद वाक्यं गिरिराजपुत्री ॥ इत्यादि ।

End. श्रुत्वैतत् परमं गुह्यं येऽपि स्युः पापयोनयः ।
स्त्रियः शूद्राश्च येऽपीह यद्गत्वोकं व्रजन्ति वै ॥

Colophon. इति स्कन्दपुराणे श्रवणमयने पार्व्वतीशिवसम्वादे श्रीनीलकण्ठस्तवराजः समाप्तः ॥ * ॥

विषयः। कालकूटधारणनिरूपणमुखेन नीलकण्ठस्तवनिरूपणम् ।

---

No. 211. नीलाचलीयतीर्थप्रयोगः. Substance, country-made paper, 16×3½ inches. Folia, 10. Lines, 5 on a page. Extent, 119 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamanasiṁha, kāṭihāli, Paṇḍita Parāṇacandra Tarkālaṃkāra. Appearance, tolerable. Prose. Generally correct.

Beginning. ॐ नमः कामाख्यायै । अथ योगिनीतन्त्रोक्तनीलाचलीयतीर्थप्रयोगः ।
गयाशीर्षे गयाकूपे तथा नीलाचले गया ।
त्रिगयापिण्डदानेन पुनः श्राद्धं न चाचरेत् ॥
आमशेषेर्थिपर्य्यन्तं चाविवाहान्तमादनम् ।
देवा मरणमिच्छन्ति किं पुनर्मानवादयः ॥ इत्यादि ।

End. सुकादीनाञ्च यजन्नानं यमादिपरिशोधितम् ।
तद्देव द्रवरूपेण कामाख्यायोनिमण्डले ॥
नरयोनिः केन प्रकारेण भवति एकमेव सत्यं चञ्चलं स्यात् सत्यम् ।
एकोऽपि नवधा भूत्वा न्यपतद् योनिमण्डलम् ॥ इति योगिनीतन्त्रीयवचनात् ।

Colophon. समाप्तोऽयं ग्रन्थः ॥ * ॥

विषयः। क्षेत्रप्रमाणनिरूपणमुखेन कामाख्यायां कर्त्तव्यकर्म्मविषयनिरूपणम् ।



---

**No. 212.** नैषधचरितटीका, (अन्वयबोधिका). By प्रेमेन्द्रन्यायरत्नः. Sustance, country-made paper, 16 × 3 inches. Folia, 47. Lines, 9 on a page. Extent, 150 çlokas. Character, Bengali. Date, ? Place of deposit, Tāmluk Kelomāl, Bābu Sāradāprasanna Ghoṣa. Appearance, new. Prose. Generally correct.

**Beginning.** ॐ नमः परदेवतायै ।

याकाङ्क्षितामलपदा नियतं जनानां

शब्दार्थसञ्चयसमुन्नयने च योग्या ।

व्यक्तीकरोति निखिलं हृदि भावजातं

वाग्देवतामभिमतामहमाश्रये ताम् ॥

अन्यासु भावबहुलासु सदर्थिकासु

टीकासु चेदिह भवेत् विफलः प्रयत्नः ।

सद्भिस्तथापि मृदुबोधविबोधनार्थं

जातोद्यमोऽहमिह मत् प्रति नावबुद्धौ ॥

अस्य ग्रन्थस्य महाकाव्यतया वर्णनीयप्रसिद्धनायकत्वेन सहृदयानां झटिति

साभिनिवेशशुश्रूषाप्रकीर्णतया च प्रथमं सन्नायकनामरूपं वस्तु निर्दिशति ।

निपीयेति । इत्यादि ।

**End.** खण्डितत्वात् शेषो नास्ति ।

विषयः । नैषधचरिताख्यस्य महाकाव्यस्य व्याख्यानम् ।

---

**No. 213.** न्यायादर्शः वा न्यायसारावलिः. By जगदीशतर्कालङ्कारः. Substance, country-made paper, 14 × 4 inches. Folia, 23. Lines, 16 on a page. Extent, 1,725 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Vikramapura, Ichāpurāgrāma, Paṇḍita Rajanikānta Tarkaratna. Appearance, old. Prose. Incorrect.

**Beginning.** ॐ नमो गणेशाय ।

कर्पूरकुन्दकुसुमकैलामोदरमोदरम् ।

विघ्नविध्वंसकं धाम नमामो नैव दैवतम् ॥

अन्यैरनुष्ठितविविधवादैः कलुषीकृतः कविभिः ।

न्यायादर्शं इदानीं श्रीजगदीशप्रकाशितं स्फुरतु ॥

यन्माद्दशेन समुपदिष्टमदृष्टमन्यैः
श्रीसार्व्वभौमगुरुणा करुणामयेन ।
सिद्धान्तवाद्रत × सु × × × दृत्वा
विद्यार्थिनां गुरुकृते प्रकृतं वदामः ॥

अथ निखिलवस्तुषु विदितेषु लौकिकेषु च कर्म्मसु तत्तत्फलस्य कारणत्वं निर्णीय प्रवर्त्तन्ते । न तु तद्ज्ञानाकलयन्तः । तत्र किन्नाम कारणत्वम् । न च तावत् तत्तत्फलाव्यवहितपूर्व्वत्वमतिप्रसङ्गात् क्वचिदप्रसङ्गाच्च । नापि तद्भावप्रयोजकीभूताभावप्रतियोगित्वम् । प्रयोजकत्वं हि न व्यापकत्वं घटारम्भकसंयोगादिकं प्रति घटादेर्जनकतापत्तेः । नापि स्वरूपसम्बन्धविशेषः । प्रमाणाभावात् । इत्यादि ।

End. किन्तु स्वप्रयोज्यविजातीयसंयोगसाधेति न स्वर्गादिघटकस्योत्पत्तौ व्यभिचारस्तत्रापि लौकिकस्वरूपस्यापि नियतत्वदण्डस्य ताद्दशप्रत्यासत्त्या सत्त्वादित्यपि वदन्तीति कृतं पल्लवितेन ॥

Colophon. इति महामहोपाध्याय—जगदीशतर्कालङ्कारविरचिता न्यायसारावलिः सम्पूर्णा ॥

विषयः । अत्र प्रथमं कारणत्वस्वरूपविवेचनम् । तत्र एकदेशिमतादिन्यासपूर्व्वकं तत्तन्मतखण्डनम् । समवाय्यसमवायिनिमित्तभेदात् कारणत्वस्य त्रैविध्यनिरूपणम् । तत्र चित्ररूपत्वादिस्वरूपकथनपूर्व्वकं मीमांसकमतखण्डनम् । अन्यमतेषु क्वचिद्बहुत्वसंख्यामात्रं क्वचिन्महत्त्वमात्रं क्वचिद्बहुत्वसंख्यामहत्त्वोभयं क्वचिन्महत्त्वप्रचयोभयं क्वचिच्च बहुत्वसंख्यामहत्त्वप्रचयत्रितयमेव कारणं कार्य्यप्रत्यासत्त्या कारणमिति निरूपणम् । अथ दीर्घत्वाख्ये च परिमाणे महत्त्वमात्रं दीर्घत्वमात्रं बहुत्वदीर्घत्वोभयं बहुत्वदीर्घत्वप्रचयत्रितयञ्च यथायोगमसमवायिकारणमिति निरूपणम् । एवं संयोगादिषु कारणत्वविवेचनञ्च ।

---

**No. 214. पद्यपद्धतीटीका.** Substance, country-made paper, 18 × 4½ inches. Folia, 7. Lines, 9 on a page. Extent, 323 çlokas. Character, Bengali. Date, ? Place of deposit, Kāṭhālpāḍā, Post Office Naihāṭi, Paṇḍita Rāmatāraṇa Ṭhākur. Appearance, old. Verse. Incorrect.

**Beginning.** श्रीशिवः ।
वाणी गम्भकथा पृथ्वी निहतीव्वा च धारणम् ।
शाकिनीमहिषी मज्जा वृत्ताधारकथा स्मरे ॥

कथारोपो (?) यशोविंश्चप्रतिष्ठाञ्चाप्तमेव च ।
शोधयं राशिक्षौमिः स्वाधिष्ठानमिवातरः ॥ इत्यादि ।

End. अन्यजस्तस्करः सिंहे कन्यायाञ्च वराङ्गना ।
पुत्रो भ्राता सखा वापि तुलायां तस्करो भवेत् ॥
वृश्चिके सेवकश्चौरश्चापे माता स्त्रियोऽथवा ।
मृगे वेश्याजनश्चौरः कुम्भे चौरश्च मूषिकः ।
मीने धरागते स्थाने नाम चैषां न विद्यते ॥

Colophon. इति पञ्चपक्षीटीका समाप्ता ॥

विषयः । पञ्चपक्षीनामकस्य ज्योतिषग्रन्थस्य व्याख्या ।

---

**No. 215.** पञ्जीनिबन्धः. By हेमकरः. Substance, country-made paper, 18×1½ inches. Folia, 95. Lines, 4 on a page. Extent, 1,425 çlokas. Character, Bengali. Date, Sk. 1669. Place of deposit, Serapura, District Mayamanasimha, Mahāmahopādhyāya Candrakānta Tarkālaŋkāra. Appearance, new. Prose. Generally correct.

Beginning. ॐ नमो गणेशाय ।
श्रीसर्व्वाङ्गजगन्नाथं प्रणम्यादिमनादिकम् ।
गुरूपदिष्टमाम्नायाल्लिख्यते वृत्तिचेतसे ॥
देवमित्यादि । प्रणम्येति प्रादीनां नाभत्वमिति समासः । तथा हि नाम-
प्रकरणं निरूप्रकरण उच्यते । इत्यादि ।

End. यदि शोध्येऽर्थेऽथमर्थविषये लृचमिति निपातः तद्दोषमर्थं इति न सिध्यति ।
इत्याह अथमर्थं इत्यादि । स्रवन्तोरपीति तेषां मते स्रोत स्रवन्तो-
रपलक्षणम् । अथर्वा ॥ अवर्णं स्रोटो हविरिति सन्निपातलक्षणो विधि-
रनिमित्तं तद्विघातस्य वर्णग्रहणे निमित्तत्वादिति च नाविनं भवतीति ॥०॥

Colophon. इति श्रीमद्धेमकरविरचिते पञ्जीनिबन्धे कृत्पादः षष्ठः समाप्तः ॥ * ॥
९ ६ ६१
नर तर्क रसे शाके लिखिता पुस्तिका शुभा ।
शकाब्दा १६६९ ॥

विषयः । कातन्त्रपञ्जीव्याख्या ।

---

**No. 216.** पत्रकौमुदी. By वररुचिः. Substance, country-made paper, 19 × 4 inches. Folia, 5. Lines, 9 on a page. Extent, 245 çlokas. Character, Bengali. Date, ? Place of deposit, Naihāṭi, District 24-Parganās, Paṇḍita Haraprasāda Çāstrī. Appearance, tolerable. Prose. Incorrect.

**Beginning.** ॐ दुर्गायै नमः ।

श्रीमत्कृष्णपदारविन्दयुगलं ब्रह्मेश्वराद्यामर-
श्रेणीनम्रकिरीटकोटिविलसच्छ्रीपुष्पार्च्चितं सन्ततम् ।
वाणीञ्च प्रणमामि विश्वजननीं प्रत्यूहविध्वंसिनीं
भक्तानुग्रहविग्रहात् भगवतीं नित्यं वचोहृदये ॥
विक्रमादित्यभूपस्य कीर्त्तिसिन्धोर्निदेशतः ।
श्रीमान् वररुचिर्धीमान् तनोति पत्रकौमुदीम् ॥
राज्ञां मन्त्रिप्रवीराणां पण्डितानां तथैव च ।
गुरूणां स्वामिभार्य्याणां तथैव पितृपुत्रयोः ॥
सन्न्यासिभृत्ययत्नणां तथैवान्यविवेकिनाम् ।
एतेषामपि सर्व्वेषां पत्रचिह्नादिकं ब्रुवे ॥ इत्यादि ।

**End.** अथ विवेकिनां प्रशस्तिः । स्वस्तिश्रीभगवत्पदपङ्कजपूजनोचितपुष्पपुञ्जपवित्रीकृतान्तःकरणदिग्दन्तविसरमानाकशायशोऽनुच्छिन्निरवधिवसुमिश्रामनाथरीकृतसुरपुरभूमीश्वरेषु ॥ स्वस्तिश्रीमत्परमेश्वरपदपाथोरुहाद्यतुरचितपचरीकभूवृन्दारकवृन्दावनिजमिनमितयमःपङ्कपटलाच्छुतदिगङ्गनागणमनतटपवनप्रतापोर्व्वश्चर्व्वीकृतप्रत्यर्थिसार्थगर्व्वान्नपारावारेषु ॥ * ॥

**Colophon.** इति वररुचिविरचिता पत्रकौमुदी समाप्ता ॥

**विषयः ।** पत्ररचनम् । पत्रप्रमाणम् । लेखकलक्षणम् । पत्रखननक्रमः । लिखनप्रकारः । पत्रानयनक्रमः । पठनक्रमः । पत्रचिह्नानि । राजपत्रस्य कोषच्छेदप्रकारः । पण्डित-मन्त्रि-स्वामिप्रभृतीनां पत्रलिखनक्रमः । राजप्रशस्तिः । मन्त्रिप्रपस्तिः । गुरु-भार्य्या-पुत्रप्रभृतीनाञ्च प्रशस्तिः ।

---

**No. 217.** पदार्थसंग्रहः. By विजयीन्द्रभिक्षुः. Substance, country-made paper, 12 × 4 inches. Folia, 16. Lines, 9 on a page. Extent, 522 çlokas. Character, Nāgara. Date, ? Place of deposit, District Vākuḍā Viṣṇupura, Paṇḍita Rāmānuja Bhaṭṭācāryya. Appearance, tolerable. Prose. Incorrect.

**Beginning.** श्रीराघवेन्द्रगुरुराजाय ते नमः । ॐ श्रीमज्जयतीर्थगुरुभ्यो नमः । श्रीविज-यीन्द्रगुरुभ्यो नमः ।

ॐ लक्ष्मीपतिं संप्रणम्य सर्व्वज्ञादिगुरूनपि ।
पदार्थानां संग्रहोऽयं क्रियते बालतोऽल्पशः ॥
द्रव्यगुणकर्मसामान्यविशेषविशिष्टांशिशक्तिसादृश्याभावभेदादश पदार्थाः ।
इत्यादि ।

**End.** परमा चाच सकलभोगयुक्ता मुक्तमल्लादिभिः ईयमानलक्ष्मीके विमलाख्ये पर्य्यङ्के शयने तव प्रिये कर्म्मचाम्प्रति बहुधा विभूतिर्वन्ननामं करोति महा-लक्ष्मीः इत्येव मङ्गलम् ॥

**Colophon.** इति विजयीन्द्रभिक्षुविरचितः पदार्थसंग्रहः समाप्तः ॥ * ॥

**विषयः।** पदार्थादिनिरूपणम् । द्रव्यादिनिरूपणम् । गुणादिनिरूपणम् । सृष्टिप्रकरण-निरूपणम् । प्रलयनिरूपणम् । ज्ञानप्रकरणादिनिरूपणञ्च ।

---

**No. 218.** पद्यावलिः. Substance, country-made paper, 13 × 3½ inches. Folia, 27. Lines, 10 on a page. Extent, 709 çlokas. Character, Bengali. Date, Sk. 1750. Place of deposit, Viṣṇupura, Kriṣṇagañja, District Vãkuḍā, Çaçibhūṣaṇa Gosvāmi. Appearance, new. Verse. Generally correct.

**Beginning.** श्रीश्रीराधाकृष्णाभ्यां नमः ।

पद्यावली विरचिता रसिकैर्मुकुन्द-
सम्बन्धबन्धुरपदा प्रमदोर्म्मिसिन्धुः ।
रम्या समस्तजनतां दमनी क्रमेण
संगृह्यते ललितदम्भककौतुकाय ॥

प्रारम्भे मङ्गलाचरणमाह ।

नमो मलिमनेचाय वेणुवाद्यविनोदिने ।
राधाधरसुधापानशालिने वनमालिने ॥

कस्यचित् ॥

भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्द्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये ।

लावण्यैकमहानिधीरसिकतां राधाहरी कुर्व्वती
युष्माकं कुरुतां भवार्त्तिशमनं नेत्रे तनुर्वा परेः ॥ इत्यादि ।

**End.** योगेश्वरस्य ॥

जयदेवबिल्वमङ्गलमुख्यैः कृता येऽत्र सन्ति सन्दर्भाः ।
तेषां पद्यानि विना समाहृतानीतराण्यत्र ॥
श्रीमन्मदनगोपालचरणद्वन्द्वसन्निधौ ।
पद्यावली विरचिता केनचित् द्विजबन्धुना ॥

**Colophon.** समाप्तेयं पद्यावली ॥ * ॥ शकाब्दाः १७५० ॥

**विषयः ।** भक्तजननिकरकृतनानाविधभव्यस्तवविषयकश्लोकसंग्रहः ॥

---

**No. 219.** परमात्मसन्दर्भः. Substance, country-made paper, 12 x 4 inches. Folia, 39. Lines, 11 on a page. Extent, 1,199 çlokas. Character, Bengali. Date, ? Place of deposit, District Vãkuḍā Kūcekol, Bābu Yogindranātha Siṁhadeva. Appearance, tolerable. Prose. Generally correct.

**Beginning.** श्रीकृष्णचैतन्यचन्द्रो जयति ।

तौ सन्तोषयता सन्तौ श्रीलरूपसनातनौ ।
दाक्षिणात्येन भट्टेन पुनरेतद्विविच्यते ॥
तस्याद्यं ग्रन्थनालेखं क्रान्तमुत्क्रान्तखण्डितम् ।
पर्य्यालोच्याथ पर्य्यायं कृत्वा लिखति जीवकः ॥
अथ परमात्मा विव्रियते तत्र तं जीवनिरूपणपूर्व्वकं निरूपयति द्वाभ्याम् ।
चेतस्य आत्मा मनसो विभ्रती
जीवस्य माया रचितस्य नित्याः ।
आविर्हिताः क्वापि तिरोहिताश्च-
शुद्धो विचष्टे ह्यविशुद्धकर्त्तुः ॥ (?) इत्यादि ।

**End.** यथेन्द्रियैः पृथग्द्वारैरर्थो बहुगुणाश्रयः ।
एको नानायते तद्वत् भगवान् शास्त्रवर्त्मभिः ॥
इत्युदाहरणीयं । अनेनैव मतिसामान्यञ्च सिध्यतीति ॥ श्रीशुकः । प्रथम-
स्थापितं यद्गीतादिपद्यम् ॥ * ॥

**Colophon.** इति कलियुगपावनभजनविभजनप्रयोजनावतार-श्रीश्रीभगवत्कृष्णचैतन्य-देवचरणानुचरविश्ववैष्णवराजसभाजन-श्रीरूपसनातनानुशासनभारतीगर्भे श्रीभगवत्सन्दर्भो नाम तृतीयः सन्दर्भः ॥

ऊर्ज्जे मास्यसिते पक्षे नवम्याञ्च तिथौ मुदा ।
शाके इन्द्वष्टशून्येन्दौ दिने सोमपरिप्लुते ।
पूर्णिता लिपिमालेयं कण्ठहारेण केनचित् ॥

**विषयः ।** वैष्णवग्रन्थोऽयं । अत्र च जीवपरमात्मादिविचारमुखेन जीवपरमात्मादि-निरूपणम् ।

---

**No. 220.** परिभाषाविवरणम् . Substance, country-made paper, 15 × 2½ inches. Folia, 22. Lines, 6 on a page. Extent, 495 çlokas. Character, Bengali. Date, Sk. 1626. Place of deposit, Vāḍari, District Mayamanasimha, Paṇḍita Çivacandra Nyāyabhūṣaṇa. Appearance, old. Prose. Correct.

**Beginning.** ॐनमो गणेशाय ।
प्रणम्य सद्सद्द्वारं ध्वान्तविध्वंसभास्करम् ।
वाङ्मार्थं परिभाषार्थं वक्ष्ये बालावबुद्धये ॥
सूत्रेष्वेव हि तत् सर्व्वं यद्वृत्तौ यच्च वार्त्तिके ।
सूत्रं योनिरिहार्थानां सर्व्वं सूत्रे प्रतिष्ठितम् ॥ इत्यादि ।

**End.** न्याय्यश्चैतत् शब्दार्थानवच्छेदे विशेषस्मृतिहेतूनां प्रकरणबलाभावे विशेषार्थ-बलात् लक्ष्यानुसार एव उचितः । तदुक्तं न ह्यनिष्टार्थानां शास्त्रे प्रवृत्तिरिति ॥

**Colophon.** इति दौर्गसिंह्यां परिभाषायां तदर्थविवरणं समाप्तम् ॥ शकाब्दाः १६२६ ।

**विषयः ।** दौर्गसिंहपरिभाषाया व्याख्यानम् ।

---

**No. 221.** परिभाषावृत्तिः. By दुर्गसिंहः. Substance, country-made paper, 13½ × 3 inches. Folia, 17. Lines, 6 on a page. Extent, 777 çlokas. Character, Bengali. Date, ? Place of deposit, Kṛṣṇapurā, Post office Vaidyervāzār, District Ḍhākā, Paṇḍita Tārakacandra Bhaṭṭācāryya. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

प्रणम्य सदसद्द्वारं ध्वान्तविध्वंसभास्करम् ।
बालानां परिभाषार्थं वक्ष्ये बालावबुद्धये ॥

इह हि ।

सूत्रेष्वेव हि तत्सर्व्वं यद्वृत्तौ यच्च वार्त्तिके ।
सूत्रं योनिरिहार्थानां सर्व्वं सूत्रे प्रतिष्ठितम् ॥

येन केनचिच्छास्त्रज्ञातुकामेनावश्यमेवाभ्युपगन्तव्यम् । तथाचान्वर्थः बर्थान् सूचयति सूते सूत्रयति इति वा सूत्रम् । तत्र सूत्रकारयोः सर्व्ववर्म्म-कात्यायनयोः सूत्राणां चतुःशत्यां पञ्चदशाधिकायां परिभाषा नोक्ता अथ च वृत्तिटीकयोः प्रयुक्ता कार्य्येषु दृश्यते तासां कुतः संसिद्धिरुच्यते । इत्यादि ।

**End.** ज्ञापकञ्च ऊढाणां बहुत्वेऽस्त्रियामपत्यप्रत्ययस्येत्यत्राऽस्त्रियामिति वचनम् । अन्यथाऽदन्तावत्लोपेऽस्त्रियामिति निर्द्देशोऽनर्थक एव स्यादिति ॥

**Colophon.** इति दुर्गसिंहोक्ता परिभाषावृत्तिः समाप्ता ।

**विषयः ।** लौकिकशास्त्रीयभेदेन परिभाषाद्वैविध्यकथनम् । पुनः शास्त्रीयपरिभाषया द्वैविध्यकथनम् । परिभाषाशब्दस्य व्युत्पत्तिकथनम् । नानाविधपरिभाषाया नानविधालौकिक-प्रयोजनकथनम् । नानाविधपरिभाषाया नानाविधानां शास्त्रीयप्रयोजनानां विशेषेण विवेचनम् । कातन्त्रसूत्राण्यज्ञापकान्युद्धृत्य सकीयोक्तिसमर्थनञ्च ॥

---

**No. 222.** परिभाषावृत्तिः. By रामचन्द्रविद्याभूषणः. Substance, country-made paper, 17 × 3 inches. Folia, 10. Lines, 7 on a page. Extent, 350 çlokas. Character, Bengali. Date, Sk. 1631. Place of deposit, Brāhmaṇamaṇḍali *vid* Bārāsāt, Paṇḍita Rāmanārāyaṇa Bhaṭṭācāryya. Appearance, tolerable. Prose. Generally correct.

**Beginning.** श्रीरामः शरणम् ।

मधुमथनमभीगत्वादरात्रामचन्द्रो
विविधबुधविधानैर्लब्धसाद्रप्रबोधः ।
प्रथयति परिभाषावृत्तिमुद्बोधहेतुं
भवति रमतिरम्बेवाथिमा जानता वास् ॥

येन केनचिद्व्याख्यातुकामेनावश्यमेवाभ्युपगन्तव्यम् । अर्थान् सूचयति सूते सूचयति वा सूत्रं तत्र याः परिभाषा प्रोक्ता अथच इत्तिटीकयोरुक्त तत्र प्रयुक्ताः कार्य्ये च इयम्भे तासां संक्षिप्तियुक्तिनः कथ्यते ता लौकिक्यः शास्त्रीयाश्च तत्र लौकिक्यो लोकत एव •वद्धाः । यास्तु शास्त्रीयास्ता द्विविधा लिङ्गवत्यो विध्यङ्गशेषभूताश्च । इत्यादि ।

**End.** तेन मापदं शास्त्रे प्रयुञ्जीतेति स्थितेर्गतिश्चिन्तनीयेति न्यायाभ्यासाद्देशादौच्चिद्धवन्निर्देशेन विधाय अतएव अनीत्यादिकमाचार्य्येणोक्तम् । एवञ्च परस्मैपदमिच्छन्ति कश्चिदेवात्मनेपदे इति कृत्या परस्मैपदे कप्रत्ययविधाने शास्त्रिचुदित्यत्र चुतश्चित्यस्य पाठात् अद्युतदित्युदाहृत्य तेनैव पमित्युक्तम् । विधिवत्त्वाद्दातोऽप्येवमित्यादिकमेवेति दिक् । अन्यद्‌ध्यूह्यम् । एवमन्ये न्यायः अनुमन्तव्या विस्तारभयान्न लिखिताः ॥ ० ॥

**Colophon.** इति श्रीरामचन्द्रविद्याभूषणविरचिता परिभाषावृत्तिः सम्पूर्णा ॥ ० ॥

शकाब्दाः १६९० ।

आकाशेन्दुरसाबनीचिगणिते शाकाब्दसंख्याङ्कके

न्यायोदाहरणादिकं प्रकुरुते श्रीरामचन्द्रः कियत् ।

शकाब्दाः १६९१ । १७ चैत्र श्रीरामवल्लभशर्म्मणा लिखितम् ॥

**विषयः** । मुग्धबोधस्य परिभाषेयम् । अत्र च युक्तितः सूत्रानुसृतपरिभाषाद्यर्थादीनां निरूपणम् ।

---

**No. 223. परिभाषावृत्तिटीका.** By **रामनाथसिद्धान्तः.** Substance, country-made paper, 18×3½ inches. Folia, 25. Lines, 8 on a page. Extent, 839 çlokas. Character, Bengali. Date, Sk. 1667. Place of deposit, Ādiyādaha, District 24-Parganās, Paṇḍita Haripada Bhaṭṭācāryya. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

प्रणम्य शारदापादपद्ममानन्ददायकम् ।

परिभाषावृत्तिटीकां यथाज्ञानं समासतः ॥

श्रीरामनाथसिद्धान्तो बालानां सुखहेतवे ।

तनुते तनुयाम्निम्नो गुरुपादोपदेशतः ॥

तत्रादौ तावन्निर्विघ्नेन प्रारिप्सितसिद्धिकामः स्वेष्टदेवताप्रणतिरूपमङ्गलं प्रणीय शास्त्रप्रयोजनमुपदिशन्नाह ग्रन्थकारः। हरिमित्यादि। भोर-ग्राम-वासि-मैथिल-महामहोपाध्याय-श्रीदत्तात्मजसूनुना ... ... ... ... महात्मज दामोदरदत्त-तत्पुत्रेण श्रीपद्मनाभदत्तेन परिभाषावृत्तिर्विशेषेण भाष्यते व्यक्तमुच्यते क्रियते इत्यर्थः। इत्यादि।

End. यथा ह्रस्वदीर्घप्लुतपरिभाषासु इतिकार्य्यातिदेशो यथा बहुत्वं समासवत् एवं पुंवदादि। उक्तञ्च भाष्ये निरूप्य शाकाः पञ्चातिदेश इति। इदानीं स्वकृत-ग्रन्थसंख्यामाह उक्ता इत्यादि। व्याकरणमिदमादर्श इति उपमानावधारणे समासः। व्याकरणनाम। नाम्ना सुपद्मः सुखेन पद्यते गम्यतेऽनेनेति। तस्य पञ्जिका पजि व्यक्तीकरणे चुरादिः टीकेत्यर्थः। तदनन्तरं बालानां बोधार्थं प्रयोगदीपिका उक्ता।

उणादिवृत्ती रचिता मया च धातुचन्द्रिका।

तथैव यङ्लुको वृत्तिर्न च ग्रन्थान्तरं परम्॥

परिभाषावृत्तीरचिता साहित्यं नाम्ना गोपालचरितं ग्रन्थरत्नम्।

आनन्दलहर्य्याष्टीका रचिता माघे ग्रन्थविशेषे।

टीका रचिता छन्दे रत्नञ्च छन्दसि स्मृतौ आचारचन्द्रिका निर्म्मिता।

कोषे भूरिप्रयोगाख्यो ग्रन्थस्तातस्य यत्नतः।

आदेशात्तया एते द्वादशसंख्याता ग्रन्था रचिता इत्यर्थः। इतो विद्वत्परी-हारमाह हे धीराः पण्डिताः श्रीपद्मनाभेन कृतिनायमञ्जलिर्युष्माकं संघट्यते किमर्थमित्याह एते पुस्तका वो युष्माभिः संस्कार्य्याः संशोध्या एवं प्रति-पाल्याश्च पुत्रवदात्मपुत्रा इवेति भावः॥०॥

Colophon. इति श्रीरामनाथसिद्धान्तरचिता परिभाषावृत्तिटीका समाप्ता। शकाब्दाः। १६६७॥

विषयः। पद्मनाभरचित-सुपद्मव्याकरणस्य परिभाषावृत्तेर्व्याख्यानम्।

---

**No. 224. परिभाषाप्रबोधः. By गोपीनाथतर्काचार्य्यः.** Substance, country-made paper, 16×3 inches. Folia, 246. Lines, 7 on a page. Extent, 6,235 çlokas. Character, Bengali. Date, Sk. 1721. Place of deposit, Ḍhākā, Paṇḍita Candrakānta Nyāyālaṇkāra. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

यो जातो धरणीधरेन्द्रतनयानायाद्रिपाथोधरा-
सक्तात्माऽनघमानसात् पशुपतेराचार्य्यसिंहात् सतः ।
कीर्त्तिश्रीजितशीतरश्मिकुमुदश्रेणीश्रियः श्रीमतो
दामानीतवराविराविनधराद्धीनीक्षिदैन्यारितः ॥
सोऽयं सूरिसभासभाजितमतिः कामाभवामाकृतिः
सत्योत्योतकवशीकृतेश्वरमतिः श्रीयोजनाधक्षतिः ।
गोपीनाथ इमश्चकार मधुरव्याख्यारवागीश्वर-
सर्व्वाचार्य्यवरः सदर्थचतुरः सश्रीकविद्याधरः ॥

इह खलु सकलविद्वज्जनगणकुञ्जरसम्मतिपरिप्राप्तनिखिलविघ्नध्वस्तोत्सारण-कारणप्रारब्धकर्म्मोपकारकत्वरितनमस्कारपुरःसरं ग्रन्थमारभमाणसमस्तिवज्ञं शिष्यान् शिक्षयिषन् हरिनमस्कारं करोति संसारेति । अस्यार्थः । हरिं नत्वा कातन्त्रपरिशिष्टं ब्रूमः । कीदृशं संसारतिमिरमिहिरं । स्याद्दोष-निबद्धशरीरपरिग्रहः संसारः । तत्पदमित्यादयाद्दष्टप्रयुक्तेश्वरकृत्यादि-शरीरव्यापकम् । इत्यादि ।

**End.** द्रव्यत्वजातेस्तु शब्दस्य न द्रव्यमिति क्वचिन्निरूढप्रयोगः शुक्लकृष्णशब्दयो-मेधुसर्पिरादिगणपाठासिद्धिरिति ॥

**Colophon.** इति श्रीगोपीनाथसर्व्वाचार्य्यविरचिते परिशिष्टप्रबोधे समासव्याख्यानं समाप्तम् ॥ शुभमस्तु शकाब्दाः । १७११ ।

**विषयः ।** श्रीपतिदत्तविरचित-कातन्त्रपरिशिष्टस्य व्याख्यानम् ॥

---

**No. 225.** पवनदूतम् . By धोयीकविराजः. Substance, country-made paper, 14 × 3 inches. Folia, 12. Lines, 6 on a page. Extent, 283 çlokas. Character, Bengali. Date, Sk. 1752. Place of deposit, Viṣṇupura, District Vākuḍā, Paṇḍita Raghurāma Tarkaratna. Appearance, fresh. Verse. Correct.

**Beginning.** श्रीरामाय नमः ।

अस्ति श्रीमत्यखिलवसुधासुन्दरे चन्दनाद्रौ
गन्धर्व्वाणां कनकनगरी नाम रम्यो निवासः ।
देवैर्नीलाभवनमिवरैरम्बरं याजिवङ्कि-
र्यातुः (?) शाखानगरमवमां यः सुराणां पुरस्तात् ॥

तस्मिन्नेका कुवलयवती नाम गन्धर्व्वकन्या
मन्ये जैत्रं मृदु कुसुमतोऽप्यायुधं या स्मरस्य ।
दृष्ट्वा देवं भुवनविजये लक्ष्मणं क्षोणिपालं (?)
बाला सद्यः कुसुमधनुषः संविधेयीबभूव ॥ इत्यादि ।

**End.** सन्देशोऽयं मनसि निहितः कच्चिदायुष्मता मे
किंवा भूयस्त्वयि विरचिते वक्रभिक्षाप्रकारैः । (?)
पारार्थैकप्रवणमनसस्त्वद्विधा याच्यमिश्रा-
नापन्नानां न खलु बहुशः काकुवादान् सहन्ते ॥
दन्तिव्यूहं कनकलतिकां चामरं हैमदण्डं
यो गौडेन्द्रादलभत कविक्ष्माभृतां चक्रवर्त्ती ।
श्रीधोयीकः सकलरसिकप्रीतिहेतोर्मनस्वी
काव्यं सारस्वतमिव ... ... मन्त्रमेतज्जगाद ॥
गोष्ठीबन्धः सकलकविभिर्वाचि वैदर्भरीति-
र्वासो गङ्गापरिसरभुवि स्निग्धभाग्या विभूतिः ।
सन्तु स्नेहः सदसि कविताचार्य्यकं भूभुजां मे
भक्तिर्लक्ष्मीपतिचरणयोरस्तु जन्मान्तरेऽपि ॥
यावच्छम्भुर्वहति गिरिजासंविभक्तं शरीरं
यावज्जैत्रं कलयति धनुः कौतुकं पुष्पकेतुः ।
यावद्राधारमणतरुणीकेलिसाक्षी कदम्ब-
स्तावज्जीयात् कविनरपतेरेष वाचां विलासः ॥
कीर्त्तिर्लब्धा सदसि विदुषां शीतलक्षोणिपाला (?)
वाक्सन्दर्भाः कतिचिदमृतस्यन्दिनो निर्मिताश्च ।
तीरे सम्प्रत्यमरसरितः क्वापि शैवोपकण्ठे
शश्वद्ध्याये प्रयतमनसा नेतुमीहे दिनानि ॥ *

**Colophon.** इति श्रीधोयीकविराजविरचितं पवनदूताख्यं काव्यं समाप्तम् ॥ * ॥ श्रीराधा-कृष्णाभ्यां नमः । स्वाक्षरोऽयं श्रीरामगतिशर्म्मणा ॥ शकाब्दाः १७५१ ।

**विषयः ।** काचित् कुवलयवती नाम गन्धर्व्वकन्या कामविरहसन्तप्ता सती पवनं दूतत्वेन प्रेषितवतीत्यमुमेव विषयमवलम्ब्य विरचितमिदं खण्डकाव्यम् ।

---

**No. 226.** पुत्रीकरणमीमांसा. By नन्दपण्डितः. Substance, country-made paper, 14×6 inches. Folia, 9. Lines, 10 on a page. Extent, 338 çlokas. Character, Bengali. Date, ? Place of deposit, Hālisahara, Valdeghāṭā, Bābu Giriçacandra Gaṅgopādhyāya. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

अभिनन्द्य जगद्वन्द्यपदद्वन्द्वं विनायकम् ।
पुत्रीकरणमीमांसां कुरुते नन्दपण्डितः ॥
केन कीदृक् कदा कस्मै कस्मात् कः क्रियतां सुतः ।
विविच्य नोक्तं यत् पूर्व्वैस्तद्विशेषमिहोच्यते ।
यथाहात्रिः ।
अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा ।
पिण्डोदकक्रियाहेतोर्यस्मात् तस्मात् प्रयत्नतः ॥ इति ।
अपुत्रोऽजातपुत्रो मृतपुत्रो वा । इत्यादि ।

**End.** अण्डितत्वात् दोषो नास्ति ।

**विषयः ।** दत्तकग्रहणविध्यादिनिरूपणम् ।

---

**No. 227.** पुरुषोत्तमक्षेत्रतत्त्वम्. By रघुनन्दनभट्टाचार्य्यः. Substance, country-made paper, 17×3½ inches. Folia, 10. Lines, 6 on a page. Extent, 210 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamanasiṁha, Serapura, Paṇḍita Durgāsundara Kṛtiratna. Appearance, tolerable. Prose and Verse. Correct.

**Beginning.** ॐ नमो गणेशाय ।

सच्चिदानन्दगोविन्दं नत्वा श्रीरघुनन्दनः ।
स्मृतितत्त्वे विधिं वक्ति क्षेत्रे श्रीपुरुषोत्तमे ॥
अथ पुरुषोत्तमदर्शनविधानादिः । तत्र ब्रह्मपुराणम् ।
पृथिव्यां भारतं वर्षं कर्म्मभूमिरुदाहृता ।
न चान्यत्र मर्त्त्यानां भूमौ कर्म्म विधीयते ॥
... ... यत्रास्ते दक्षिणोदधिसंस्थितः ।
कीर्त्तिदेश इति ख्यातः सर्व्वमोक्षप्रदायकः ॥ इत्यादि ।

End. ततः सूर्य्यालयं गच्छेत् पुष्पमादाय वाग्यतः ।
प्रविश्य पूजयेद्भानुं पूर्व्वोक्तं त्रिः प्रदक्षिणम् ।
दशानामश्वमेधानां फलं प्राप्नोति मानवः ॥

Colophon. इति वन्द्यघटीय-श्रीहरिश्वरभट्टाचार्य्यात्मज-श्रीरघुनन्दनभट्टाचार्य्यविरचितं श्रीपुरुषोत्तमक्षेत्रतत्त्वं समाप्तम् ।

विषयः । पुरुषोत्तमक्षेत्रकर्त्तव्यकार्य्यादिनिरूपणमुखेन दर्शनादिफलनिरूपणम् ।

---

No. 228. पृषोदरादिवृत्तिः. By पद्मनाभः. Substance, country-made paper, 18×3 inches. Folia, 4. Lines, 8 on a page. Extent, 192 çlokas. Character, Bengali. Date, Sk. 1715. Place of deposit, Brāmhaṇa-maṇḍalī *viâ* Bārāsat, Paṇḍita Rāmanārāyaṇa Bhaṭṭācāryya. Appearance, old. Prose. Generally correct.

Beginning. ॐ नमो गणेशाय ।
प्रणम्य बालगोपालं पिबन्तं नवनीतकम् ।
वक्ष्ये पृषोदरादीनि पद्मनाभो यथाविधि ॥
तथाहि प्रकृतिप्रत्ययविभागेन साधुशब्दा व्युत्पन्नाः केचिद्रूढाः केचित् यौगिकाः केचिन्मिश्राः । प्रकृतिप्रत्ययविभागार्थो योगार्थः । तदपरित्यागेन व्युत्पन्ना यौगिकाः । उभयार्थबाधकत्वेन व्युत्पन्नाव्युत्पन्ना मिश्राः । तथाचोक्तं रूढ़ियौगिकमिश्राख्यास्त्रिधा शब्दाः प्रयोजिताः । इत्यादि ।

End. निपातिता यथा गव्यूतिः क्रोशयुगे इत्यादि । गणपाठे सिद्धरूपा यथा कल्कादिषु चेत्यादि । साध्यरूपा यथा शकादेरन्धादौ इत्यादि । विस्तरे-णालमित्ययं संक्षेपः । तथाच वर्द्धमानः ।
सर्व्वं शब्दसमुद्रस्य तत्त्वं जानाति शङ्करः ।
तदर्द्धं गीष्पतिर्वेत्ति तदर्द्धं पाणिनिर्मुनिः ॥
तदर्द्धं भाष्यकारोऽपि तत् किं जानन्ति मानवाः ।
धीराः श्रीपद्मनाभेन रच्यते व्ययमस्थितिः ।
संख्याद्यैः प्रतिपाद्या वा पुरुषस्य पुस्तकाः ।
चञ्चलाप्यचला लक्ष्मीर्वाणी यत्र स्थिरे स्थिरे ॥
तं विदूरं (?) सदा वन्दे विक्रमो यत्र भूपतिः ।
कालिन्द्यादयस्तत्र संख्यावन्तः सत्तमः ॥

तेषामेको वररुचिः सर्व्वशास्त्रविशारदः ।
तत्सुतो न्यायदत्तश्च पाणिभाष्यार्थतत्त्ववित् ॥
तत्सुतो दुर्घटो श्रेयः पाणिनीयार्थतत्त्ववित् ।
जयादित्यस्तत्सुतश्च मीमांसाशास्त्रपारगः ॥
श्रीपतिस्तत्सुतश्चैव सांख्यशास्त्रविशारदः ।
गणेश्वरस्तत्सुतश्च काव्यालङ्कारकारकः ॥
तत्सुतः पद्मनाभोऽहं मयैवैतन्निगद्यते ।
यद्यपि न्यूनता स्यान्मे दृष्ट्वा क्षुद्रधियो बहात् ॥
सद्भिः क्षमिष्यते लोके क्षमासारा हि पण्डिताः ।
अयुक्तं यदिह प्रोक्तं सन्तः संशोधयन्तु तत् ॥
आशयाभिज्ञता तेषामित्यस्माकं निवेदनम् ।
शाके शैलनवादित्ये चैत्रे मासि रवेः स्थितौ ॥
द्विजेन पद्मनाभेन भाष्यसूत्रमिदं कृतम् ।

**Colophon.** इति श्रीपद्मनाभदत्तकृतौ सुपद्मे व्याकरणे उणादिवृत्तौ पृषोदरादिवृत्ति-विच्छेदः ॥ समाप्तश्चायं ग्रन्थः ॥ शकाब्दाः १३१५ ।

**विषयः ।** सुपद्मव्याकरणीयपृषोदरादिपादोऽयम् । अत्र च रूढियौगिकादिनिरूपणमुखेन पृषोदरादिनिरूपणम् ।

---

**No. 229.** प्रत्यक्षचिन्तामणिदीधितिव्याख्या. By गदाधरभट्टाचार्य्यः. Substance, country-made paper, 19 × 3 inches. Folia, 39. Lines, 7 on a page. Extent, 1,292 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Vikramapura, Ichāpurā, Paṇḍita Vrajanātha Vidyāratna. Appearance, tolerable. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय ।
नत्वा नन्दतनूजसुन्दरपदं व्याख्यां गुरोरादरा-
दुर्व्वीमण्डलमण्डनायितलसत्कीर्त्तेर्विदित्वाखिलां ।
संक्षिप्तोक्त्यतिदक्षदीधितिकृतः प्रत्यक्षचिन्तामणे-
र्व्याख्यां व्याकुरुते गदाधरबुधो मोदाय विद्यावतां ॥
गुरुकीर्त्तनरूपमङ्गलं कुर्व्वन् स्वकीयग्रन्थे प्रेक्षावत्प्रवृत्त्यर्थं तदुत्कर्षं दर्शयति नित्यमिति । हृदये ममपि । निधानं सम्यगस्थाद्दृढम् । ममपि गुणनिर:

सम्बन्धस्य स्वार्थज्ञानजननीये तत्सहकारित्वं । सहकारित्वञ्च परम्परया फलोपयोगित्वं । तथाच गुरुवाक्याधीनशाब्दबोधजन्यसंस्कारसध्रीचा मनसा निबद्धव्यमितरापरिशीलितमर्थं निश्चित्येति फलितार्थः । सिद्धान्ताविरुद्ध एवार्थो निबन्धनीय इति सूचयति विधायेति । सिद्धान्तः मूलकृता महर्षिणा तदुपजीविपूर्व्वपूर्व्वनिबन्धकारपरम्परया चाभ्युपगतोऽर्थनिकरः, स एव सारः, तदवगाहनस्य कुतर्कशतावताराचितचेतःसन्तापसन्तानोप-शान्तिसाधनत्वात् । इत्यादि ।

**End.** ज्ञानमतीन्द्रियमित्याद्यनुमितिरन्यथाख्यातिमनङ्गीकुर्व्वाणेन गुरुणानङ्गीकारात् तत्रामप्रास्य मतत्रयसिद्धभिन्नाया भट्टमते व्यधिकरणप्रकाराया ज्ञानक-प्रामाण्यग्रहणात् तन्मते बाध इत्यादिकमक्षरसबीजम् ।

**Colophon.** इति प्रथमविप्रतिपत्तिः ॥

**विषयः ।** तत्त्वचिन्तामण्यन्तर्गतप्रत्यक्षखण्डीयप्रामाण्यवाददीधितेः प्रथमविप्रतिपत्त्यन्तं व्याख्यानम् ॥

---

No. 230. प्रत्यक्षदीधितिप्रसारणी. By कृष्णदाससार्व्वभौमः. Substance, country-made paper, $12 \times 2\frac{1}{2}$ inches. Folia, 85 (without 1-71). Lines, 7 on a page. Extent, 489 çlokas. Character, Bengali. Date, Sk. 1576. Place of deposit, Bhāṭpāḍā, 24-Parganās, Paṇḍita Pañcānana Tarkaratna. Appearance, old. Prose. Correct.

**Beginning.** (अस्य प्रारम्भवाक्यं नास्ति तेन द्विसप्ततितमपत्रप्रारम्भवाक्यं लिखितं ।) एत-त्वप्रकारिका या इच्छाविषयता तद्वत्त्वादित्यर्थः । इत्यादि ।

**End.** आत्मसंसर्गायत्तत्वचितानाचार्य्यंज्ञानात्ययेऽपि फलप्रसङ्गः । तथाचाचार्य्यत्वं नैकं इति वाच्यं फलविशेषजनकतावच्छेदक इति विशेषस्य मानसत्वाभ्युपगमात् एवमनाचार्य्यादावपीति ॥

**Colophon.** इति महामहोपाध्याय-श्रीकृष्णदाससार्व्वभौमभट्टाचार्य्यविनिर्मिता प्रत्यक्ष-दीधितिप्रसारणी सम्पूर्णा ।०। शकाब्दाः १५७६ ।

**विषयः ।** तत्त्वचिन्तामण्यन्तर्गत-प्रत्यक्षखण्डस्य रघुनाथशिरोमणिकृताया दीधितेः व्याख्या ।

---

साधुमेया विना ताभ्यु केवलो न च वि सम्भवेत् ।
व्रजेशोकानुसाराभ्यां विना रूपद्वयं कुतः ॥
प्रतिलोमेन विज्ञेयः प्रयोगोऽत्र मनीषिभिः ।
दशाचतुष्टयं ख्याता वाच्यादिक्रमसूच्यते ॥
रागानुगाविवृतेश्चश्चिना नैषा प्रयोजिका ।
सिद्धान्मकथनाद्दौ यत् त्वष्णैश्वर्यं प्रकाशते ॥
व्रजेन्द्ररतिमूलं तज्ज्ञानं भक्तौ तदुचितम् ।
रसो द्विधा प्राकृतश्चाप्राकृतश्चेति तत्र च ॥
प्राकृते वत्सलत्वादि × ईश्वररतिमूलका ।
अप्राकृते ईश्वरतिर्वत्सलत्वादिमूलका ॥ ० ॥

**Colophon.** इति रागानुगाविवृतिः समाप्ता ॥
समझमा ईश्वरतिसमाधानकरैर्जनैः ।
समाधेया ईश्वरति द्वितीयादिदशाश्रये ॥ * ॥
शाके रन्ध्रेन्दुमहिसु ... मासे च तापे तथा इन्दुसुतवासरे द्वितीयायाञ्च शुक्लायां रात्रौ च दण्डद्वये रागानुगाविवृतिरियं सम्पूर्णा । मित इति १७१९ लिखितं रागानुगादिपुस्तकम् ॥ * ॥

**विषयः ।** राधाकृष्णयोः रागानुगादिलक्षणनिरूपणमुखेन तत्त्वाख्यानादिः ।

---

**No. 311.** राघवपाण्डवीयकाव्यटीका. By रामचन्द्रन्यायालङ्कारः. Substance, country-made paper, 16 × 3 inches. Folia, 105. Lines, 8 on a page. Extent, 2,730 çlokas. Character, Bengali. Date, ? Place of deposit, Ḍhākā, Bābu Bhagavāncandra Kavirāja. Appearance, tolerable. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय ।
विपक्षनाशार्जितरम्यकीर्त्तिं
नारायणाख्यं ++ देवसूनुम् ।
नमामि भूयः प्रणतेन मूर्द्ध्ना
श्रीनाथजं सावरजं सदारम् ॥
प्रणम्य नारायणमादिदेवं
श्रीरामचन्द्रो द्विज एव धीरः ।

मनोश्वरामायणभारताख्य-

काव्यस्य टीकां कुरुते सुयत्नात्

ग्रन्थारम्भे बहुतरविघ्नविनाशकं......रूपं मङ्गलं कविनावश्यं कर्त्तव्यं तत् शिष्यान्शिक्षयितुमाह स्वाधिष्ठानेत्यादि। तथाच स्वष्टिकर्त्तृत्वेन ब्रह्माणमेवादौ नमस्कुरुते ब्रह्मणे नमः स्वष्टिकर्त्रे नमः इत्यर्थः। एतेन च सर्व्वेषां स्वष्टिकर्त्तृत्वेन तदन्तःपातितया एतद्ग्रन्थस्य सुतरामेव स्वष्टिकर्त्तृकर्त्तृत्वमुपपन्नम्। किम्भूताय स्वाधीति। स्व आत्मा ईश्वरः विष्णुः तत्र अधिष्ठानं स्थितिर्यस्य। इत्यादि।

**End.** पक्षे वीरलक्ष्मीः अस्य अनन्यात्मनः आश्रयं अस्त्रं प्रतापमिव राजा नरदेवपुत्रं युधिष्ठिरं सेवते स्म॥ अत्र दृष्टान्तः शृङ्गारलक्ष्मीः यथा कामदेवं सेवते। तद्वत्। सुगममन्यत्॥

**Colophon.** इति रामचन्द्रन्यायालङ्कारभट्टाचार्य्यकृतायां राघवपाण्डवीयटीकायां शिशुपालनिकुम्भवधो नाम एकादशः सर्गः॥

**विषयः।** कविराजकृत-राघवपाण्डवीयकाव्यस्य व्याख्यानम्।

---

**No. 312.** राजादिवृत्तिः. Substance, country-made paper, 14×2 inches. Folia, 5. Lines, 9 on a page. Extent, 169 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Vikramapura, Āṭpāḍā, Paṇḍita Prasannacandra Vidyāratna. Appearance, old. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय।

नत्वा चरणद्वन्द्वं बालानामाशुबोधनम्।

राजादिगणसूत्राणां व्याख्यानं लिख्यते मया॥

राजन्शब्दःसखि। तत्पुरुषसमासे एते राजादयो भवन्ति। देवानां राजा देवराजः। परमश्च तदहश्चेति परमाहः। देवानां सखा देवसखः। तत्पुरुष इति किम्। इत्यादि।

**End.** स्त्री च पुमांश्च स्त्रीपुंसौ स्त्रीपुंसाभ्याम्। ऋक् च साम च ऋक्सामे। वाक् च मनश्च वाङ्मनसे। धेन्वनडुहादिः

**Colophon.** इति समाप्तः।

**विषयः।** कातन्त्रीय-राजादिगणसूत्राणां सोदाहरणं व्याख्यानम्।

---

**No. 313.** राधाचरितम्. By रामचन्द्रः. Substance, country-made paper, 15 × 2½ inches. Folia, 9. Lines, 4 on a page. Extent, 144 çlokas. Character, Bengali. Date, Sk. 1758. Place of deposit, District Vâkuḍā, Viṣṇupura, Kādākuli, Paṇḍita Rāmaprasanna Bhaṭṭācāryya. Appearance, fresh. Verse. Generally correct.

**Beginning.** श्रीरामः ।

काचिद्गोपी विधुरा सुरवरविरहैः खञ्जवेणी धरण्यां
सा सम्भ्रान्ता लुठन्ती स्म जपति सततं गच्छ गच्छेति नाथ ।
अस्मिन् कुञ्जे मनोज्ञे विश विश नयनन् ध्यानमात्रा कदाचिद्-
विस्रस्तं तं जगाद सकलविपिनमुद्भूतवेणुं विलोक्य ॥ इत्यादि ।

**End.** आत्मस्त्वेवं प्रकृत्या वत मितसमयं चाप्य धैर्य्यं निगूढं
यावत् कृष्णागमो नो मधुनगरपथि प्राप्तवाचा प्रतीच्छे ।
एतज्ज्ञायं प्रगच्छेत च लघु चरिता चार्द्धमेव यूयं
नो चेत् प्राणान् प्रयास्ये दिवसपतिसुतातोयगा मज्जभच्या ॥

**Colophon.** देवश्रीयुतवीरसिंहनृतिनादिष्टेन शुश्रूषया
श्रीमद्विष्णुपुराधवासकृतिनि-श्रीरामचन्द्रेण तु ।
श्रीराधाचरिते कृते परिपरिच्छेदो द्वितीयो महान्
श्रीमद्विष्णवमोदको हरिकथाराधाप्रबोधाभिधः ॥ ० ॥
श्रीरामो जयति । शकाब्दाः १७५८ ।

**विषयः** । प्रथमपरिच्छेदे—कृष्णे मथुरां गतवति विरहविधुराया राधिकाया दूतत्वेन वेणुप्रेरणादिकम् । २ ये परिच्छेदे—राधिकाप्रबोधनम् ।

---

**No. 314.** रामगीताटीका. Substance, country-made paper, 14 × 2½ inches. Folia, 14. Lines, 7 on a page. Extent, 367 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamanasiṁha, Serapura, Paṇḍita Candrakānta Tarkālaṅkāra. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमः श्रीरामचन्द्राय ।

श्रीकृष्णाय नमो नित्यं गुरवे बुद्धिदायिने ।
कृपया तत्त्वमाख्यातं कृष्णाय विपश्चिते ॥

पञ्चाननैर्विं पञ्चास्यैश्चतुर्भिश्चतुराननैः ।
सहस्रास्यैरहं शेषैरमितं किमु वर्णये ॥
स्ववचः सफलीकर्तुं भक्तिश्च राघवस्य तु ।
आरब्धं तेन गीताया व्याख्यानं मे यथामति ॥ इत्यादि ।

End. सगुणं सन्तं मां हृदा मनसा यः सेवते स हि मद्रूप एवातः संसारम् अपाद-गतरेणुभिः लोकत्रितयं पुनाति यथा रवि मंदाशकदेशे लोकत्रितयं प्रका-शयति तद्वदित्यर्थः ॥ * ॥ श्रीरस्तु मयि ।

विषयः । रामगीताया व्याख्यानम् ॥

---

No. 315. रामचरितकाव्यम्. Substance, country-made paper, 12 x 3 inches. Folia, 53. Lines, 7 on a page. Extent, 1,113 çlokas. Character, Bengali. Date, Sk. 1754. Place of deposit, Tamluk, Kelomāl, Bābu Amaranātha Ghoṣa. Appearance, tolerable. Verse. Generally correct.

Beginning. ॐ नमो भगवते रामचन्द्राय ।
अथ रामोऽश्वमेधेन यज्ञं यज्ञेश्वरो हरिः ।
मनश्चक्रेऽतिधर्मात्मा निवृत्तो राजसूयतः ॥
प्रजानां राजसूयेन प्रायशो वै क्षमो भवेत् ।
यः प्रजारक्षनाद्रामः कथं नाम तमाचरेत् ॥
इति निश्चित्य मतिमान् भ्रातृंश्चैव पुरोधसः ।
मन्त्रिणश्चान् कुशलान् रामो वाक्यमथाब्रवीत् ॥ इत्यादि ।

End. केचित् पर्णपुटं नीत्वा वन्यपुष्पफलोत्करैः ।
तमसाजलजातानि प्रफुल्लकमलानि च ॥
गृहीत्वा प्रययुः केचित् कुशांश्च कुशमुष्टिभिः ।
मुनिश्च सपरीवारो मुनीं च सपरिच्छदान् ॥
त्वरयन् जानकीं यातां चक्रे मङ्गलपूर्विकाम् ॥ ० ॥

Colophon. इति श्रीरामचरितोत्तरकाण्डमहाकाव्ये वाणिकीये शतोत्कथनं नाम चतुर्दशः सर्गः ॥ ० ॥ शकाब्दाः १७५४ ।

विषयः । रामायणोत्तरकाण्डमवलम्ब्य श्रीरामचन्द्रचरितवर्णनम् ।

---

**No. 316.** रामपूजापद्धतिः. Substance, country-made paper, 17 × 3¼ inches. Folia, 8. Lines, 7 on a page. Extent, 287 çlokas. Character, Bengali. Date, ? Place of deposit, Toliveni *viâ* Gadbetā, District Medinīpura, Paṇḍita Candranātha Cūḍāmaṇi. Appearance, tolerable. Prose. Correct.

**Beginning.** ॐ नमो रामाय । अथ रामपूजापटलः । प्रातः गुरुर्भे उत्थाय गुरु-ध्यानः रात्रिवासस्त्यक्ता शिरसि सहस्रदलकमलकर्णिकावस्थितं श्वेतवर्णं द्विभुजं वराभयकरं श्वेतमाल्यानुलेपनं स्वप्रकाशरूपं स्ववामस्थितया स्वप्रकाश-रूपया शक्त्या सहितं गुरुं विभाव्य मानसोपचारैराराध्य ऐं इति दशधा जप्त्वा नमस्कुर्य्यात् ॥ इत्यादि ।

**End.** निर्माल्यं शिरसा धार्य्यं सर्व्वाङ्गे चानुलेपनम् ।
नैवेद्यं चोपभुञ्जीत दत्त्वा तद्भक्तिशालिने ॥
पादोदकं पीत्वा नैवेद्यं किञ्चित् स्वीकृत्य अन्यद्यथायोग्याय दत्त्वा यथासुखं विहरेत् ॥

**Colophon.** इति रामपूजापद्धतिः ॥

**विषयः ।** रामपूजाविधिस्तत्प्रयोगादिश्च ।

---

**No. 317.** रामलीलामृतम्. By कृष्णमोहनः. Substance, country-made paper, 18 × 2½ inches. Folia, 46. Lines, 5 on a page. Extent, 920 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Vikramapura, Phursāil, Paṇḍita Advaitacandra Nyāyaratna. Appearance, old. Verse. Incorrect.

**Beginning.** (आदितस्त्रीणि पत्राणि न सन्ति ।)
या प्राणप्रतिमा सुहृत्प्रियतमा या पापपुण्ये समा
यामाश्रित्य टदाश्रमः सुखमिहान्यथापि दुःखापहा ।
पुत्राभुक्तिपदं सदुक्तिसुखदं सर्व्वत्र भव्यास्पदं
तत्पुत्रस्य वनौ रसैकसरणौ कर्त्तां त्यजेत् कामिनीम् ॥
नित्यं तव्यजनं निषेकनिपुणं तेजस्विनं शोभनं
रामा कामयते स्थितेऽपि दयितेऽप्यासे वदान्योद्यते ।

चाम्रा तं दयितं त्यजत्यपि सुतं कः प्रत्ययस्तेन चेत्
त्यक्ता तन्नु जनं भृशप्रणयिनं चर्म्मं दया न चणम् ॥
दुष्प्रेचे दहने चिताधिशयने मित्रान्वयोद्दीपने
पुत्रादप्यजरं वपुः प्रियतरं प्रेम्णा प्रिया कातरम् ।
++ यानुपतिं स्वधर्म्मविरतिं निःशेषपापस्थितिं
सद्यस्तारयते कुलानि ++ ते कस्तां त्यजेत् लाम्यते ॥ इत्यादि ।

End. दुर्ज्ञेयं चरितं सुरैरपि तु यत् तस्या + लेशो मया
तद्दो++मतीव यत्नकलितो रामेति मे शासनम् ।
स्नानाग्नौ प्रियतामिव ++++ कत्वाथ भक्त्याम्बुधौ
नो चे+चिप घोरजन्मजलधेः पारे जगन्नायक ॥
येनाकारि गुरुद्विजाच्युतरमावाणीपिणाकीश्वरी
गङ्गा शम्भुसुतात्मजा हरिहरादित्यादिकानां परा ।
रम्या तत्स्तुतिमालिकातिविमले ++++
नानातन्त्रसमूहसङ्ग्रहचयः सत्प्रीतये तद्यथा ॥
मन्त्राद्यानविधानपूजनपुरश्चर्य्यादि यत्रेरितं
तद्रम्यागमचन्द्रिकाख्य इतरश्चानन्दसिन्ध्वाकयः ।
यत्रोक्ताप्युपचारभक्तियजना ++ क्रिया प्रायशो-
ऽहश्शानमितोऽगदाङ्कदुरितं पौर्व्वन्तु यत्रेरितम् ॥
ध्यानावल्यभिधोऽपरः सुमनसां ध्यानं यतो भावितं
नानाकौशलकाव्यचित्ररचितं श्रीरामलीलामृतम् ।
काव्यं नव्यमिदं कृतञ्च कविना तेनैव किञ्चित् तत-
श्छन्दः प्राकृतपारसीकसुमनोवाणीविमिश्रैः पृथक् ॥
सीतारामानुजतनुजगह्याकृतं सौधकन्दं
सर्व्वानन्दागमसुपनयेत् सौमनस्यञ्च पावम् ।
ब्रह्मज्ञानं फलममृतकं सत्पदे सेवकाष्टे
स्वान्ते सन्तः कलयत चित्तं सावधानं तदेतत् ॥

Colophon. तारा सा जननी सुधीरजठरा+तीव दुर्गावती
सुक्ता रामसती तु यत्करणया सर्व्वं समुन्मीलितम् ।
तत्प्रीतीच्छितकर्म्ममोचनकृते श्रीरामलीलामृते
काव्ये भव्यजनैकमोदजनके सर्गोऽभवत् सप्तमः ॥

**विषयः ।** विश्वामित्रपुरस्कृतस्य रामस्य अहल्याशापविमोचनादिरावणवधान्तं यावच्चरित्रवर्णनम् । तत्र चतुर्थे सर्गे चित्रकाव्यप्रदर्शनव्याजेन विविधबन्धकथनम् । यथा,— खड्गबन्धः । पद्मबन्धः । सोपानबन्धः । गोमूत्रबन्धः । चक्रबन्धः । कुलालचक्रबन्धः । पक्षिबन्धः । खड्गबन्धः । दुर्गबन्धः । सुदर्शनचक्रबन्धः । मुरजबन्धः । नागपाशबन्धः । वारणबन्धश्चेति ।

---

**No. 318. रामार्चनचन्द्रिका.** By **आनन्दवनः.** Substance, country-made paper, 14×3 inches. Folia, 102. Lines, 7 on a page. Extent, 2,499 çlokas. Character, Bengali. Date, ? Place of deposit, District Vākuḍā, Viṣṇupura, Paṇḍita Rūparāma Bhaṭṭācāryya. Appearance, tolerable. Verse. Generally correct.

**Beginning.** नमः श्रीरामचन्द्राय ।

तत्त्वं संसृतिवारिधिं त्रिजगतां नौर्नाम यस्य प्रभो-
र्येनेदं सकलं विभाति सततं जातं स्थितं संहृतम् ।
यस्मिन्नो निगमा भवन्ति न मनो मानं वराधीश्वरे
तं वन्दे सहजप्रकाशममलं श्रीरामचन्द्रं परम् ॥
विश्वव्यापितनोः शुभा रघुपतेर्मूर्त्तिरमूर्त्तिस्तयो-
र्वाक्यार्थप्रतिपादनैकचतुरः शान्त्यादिशीलः शुचिः ।
अज्ञानान्ध + वारणैकतरणिर्विज्ञानचिन्तामणि-
र्नित्यानन्दपदैकभूर्विजयते श्रीमान्मुकुन्दो मुनिः ॥
वेदान्तवाक्यार्थरविर्विराजते
यस्मिन् गताः काममदादयो न चि ।
बुधाः सदानन्दपदं प्रपेदिरे
वन्दे मुकुन्दाश्रमनं गुरुं परम् ॥
पूर्व्वस्त्रीचरतापनीयमखिलं कल्पं वनं गाहते
प्रस्थानस्त्रिवशिष्ठनामसुचिताः कल्पास्तथा संचिताः ।
शास्त्रं मन्त्रमयं मया कुवलयं त्वालोच सीतादिकं
श्रीरामार्च्चनचन्द्रिका कलिमलप्रध्वंसिका प्रोच्यते ॥
तत्तद्ग्रन्थगतैर्नानावाक्यैरेव च संस्कृतैः ।
सौकर्य्यार्थं क्रमः सम्यक् संक्षेपेण प्रतन्यते ।
उच्यते प्रथमं तत्र लक्षणं गुरुशिष्ययोः ॥ इत्यादि ।

End. कोऽप्यनुपचमम्बुधिर्वयमपि प्रेमाद्रिजं साम्प्रतं
संसारदावानलतापशान्त्यै × × श्रीरामार्चनचन्द्रिकेयम् ।
स्यात् संहितामार्गसुपाश्रयद्भिर्वादिद्विभिर्नन्दितसोषयत् ॥ (?)
पटलैः पञ्चभिः प्रोक्ता श्रीरामार्चनचन्द्रिका ।
आनन्दवननाम्ना हि यतिना हरितुष्टये ॥ ० ॥

Colophon. इति श्रीमत्परमहंसपरिव्राजकाचार्य्य-श्रीमन्मुकुन्दवनश्रीचरणशिष्यानन्दवन-विरचितायां रामार्चनचन्द्रिकायां पञ्चमः पटलः ॥ समाप्तश्चायं ग्रन्थः ॥

विषयः। गुरुशिष्यलक्षणादिनिरूपणम् । सुप्तप्रबोधकालादिनिरूपणम् । राशिशुद्ध्यादिनिरूपणम् । मन्त्रसंस्कारादिः । रामसीताध्यानादिः । बीजाद्यर्थनिरूपणम् । मासनक्षत्रादिशुद्धिनिरूपणम् । होमविध्यादिः । दीक्षाप्रकरणादिः । तिलकधारणविध्यादिः । द्वितीयदिनभागकृत्यविधिः । शुद्धिचतुष्टयादिः । भूतशुद्ध्यादिः । न्यासादिनिरूपणम् । प्रथमे द्वितीये च पटले एते विषयाः सन्ति । ३ यपटले ध्यानपूजाप्रयोगादिः । तीर्थधारणादिश्च । ४ र्थपटले षष्ठदिनभागकर्म्मादिः । पुरश्चरणादिः । सर्व्वयन्त्रसाधारणक्रमादिश्च । ५ मपटले रामनवमीमाहात्म्यादिनिरूपणमुखेन पूजादिनिरूपणमिति ।

---

**No. 319. रावणचेटकम्.** Substance, country paper. Folia, 5. Lines, 8 on a page. Extent, 115 çlokas. Character, Nāgara. Place of deposit, Gobardhanasarāi, Benares, Paṇḍita Vindhyeçvariprasāda Dube. Appearance, fresh. Generally correct.

Beginning. श्रीगणेशाय नमः ॥ अथ रावणचेटकस्य सर्व्वोपकारमन्त्रचेटकानां इत्याराधनेन सिध्यति । अथ मन्त्रः ॐ श्रीं ह्रीं मुं चां चीं चूं चें चौं चः ॐ नमो भगवते दशकण्ठाय दशशीर्षाय दशाननविंशतिनेत्रधराय एकादशजिह्वाद्वादशश्रोत्र-नवनासा-विंशत्योष्ठाय विंशतिपाणिने विंशतिभुजाभूषिताय नागयज्ञोपवीताय नमः सर्व्वविद्याविशारदाय । इत्यादि ।

End. अथार्जुनचेटकं ॐ श्रीं श्रीं श्रीं श्रीं श्रीकार्त्तवीर्य्यार्जुन-सहस्रकरसंज्ञित-सहस्रायुधधर-सहस्ररश्मिधर--सहस्रमूर्त्तिधर--सहस्रकवचधर--सहस्र--चक्रधर--दण्ड-पाश--गदा-शक्ति--वज्राङ्कुश-शूल-मुद्गर-मुसल-तोमर-कुठाराङ्कुश-चक्र-करवाल-परिघचक्र-राजशिवाधर सर्व्वदुष्टचौरान् नाशय नाशय

सर्व्वलोकान् पालय पालय ॐ ह्रीं सहस्रारे ह्रं फट् स्वाहा परस्य बाध राष्ट्रं स्वराष्ट्रस्यात्मनो परि परितोषमोक्षमार्गेण रक्षा च इत्यजरं जपेत् ।

**Colophon.** इत्यागमोक्तकुम्भकर्णचेटकाख्यं रावणोक्तं चयोदशचेटकं समाप्तिमगात् । श्रीशिवशक्तिशङ्करो जयति जय शङ्कर जय शङ्कर जय शङ्कर जय शङ्कर जय शङ्कर ।

**विषयः ।** रावणचेटकम् । रक्तकचेटकम् । अग्निचेटकम् । विश्वावसुचेटकम् । चोला-चेटकम् । कुम्भकर्णचेटकम् । वाचाटचेटकम् । विश्वचेटकम् । रक्तकम्बलचेटकम् । क्षोभ-चेटकम् । सागरचेटकम् । निशाचरचेटकम् । चुचुकचेटकम् । सुपथचेटकम् । प्रेरकचेटकम् । भवचेटकम् । अर्ज्जुनचेटकञ्च ।

---

**No. 320.** रुग्विनिश्चयटीका (वैद्यमनोरमा) By रामकृष्णभट्टः. Substance, palm-leaf, 18×1 inches. Folia, 241. Lines, 4 on a page. Extent, 5,061 çlokas. Character, Bengali. Date, Sk. 1685. Place of deposit, District Ḍhākā, Vikramapura, Vāsirā, Bābu Bhagavāncandra Kavirāja. Appearance, tolerable. Prose. Correct.

**Beginning.** नमो गणेशाय ।

लोकेशं व्यक्तमव्यक्तं निर्गुणं त्रिगुणात्मकम् ।
सदसद्रूपिणं वन्दे तं कारणमकारणम् ॥
वन्दे चरणसरोजं श्रीगौरीनीलकण्ठयोः पित्रोः ।
यद्भक्त्या ज्ञानहत्यास्तरन्ति दुःखाम्भोधिं लोकाः ॥
... ... ... ... ... ... ... ... ... ... ... ... ।
तन्यते रामकृष्णेन टीका वैद्यमनोरमा ॥

अथ खलु सुश्रुताद्यखिलविस्तृतविद्यावबुद्धिर्माधवकरो निखिलतन्त्रतत्त्वसङ्क्षेपकं विविधशिष्यवृत्यादनाय ... ... ... परम्परापरिप्राप्तमखिलप्रत्यूहव्यूहव्यपोहहेतुमीश्वरनमस्कारं प्रागकार्षीत् । प्रणम्येत्यादि ।

रुग्विनिश्चयसंज्ञकोऽयं ग्रन्थो निबध्यते । इति श्लोकद्वयेन—इत्यादि ।

**End.** प्रसन्नदोषमिति । प्रसन्ना अविकृता दोषा यस्य तम् । तमेव कथं जानीया इत्याह । प्रतिस्वधातुमित्यादिधातुशब्देन वाताद्यो रसाद्यो-ऽपिवोद्धाद्व्याः ।

**Colophon.** इति श्रीरामकृष्णभट्टकृतायां वविनिश्चयटीकायां वैद्यमनोरमायां विष-निदानवृत्तिः समाप्ता ॥ शुभमस्तु शकाब्दाः १६८५ ।

**विषयः ।** माधवकरकृत-निदानापरनामकवविनिश्चयाभिधान-वैद्यकग्रन्थस्य व्याख्यानम् ।

---

**No. 321.** **षत्वादिवृत्तिः.** By **मधुसूदनः.** Substance, country-made paper, 16 × 3 inches. Folia, 16. Lines, 5 on a page. Extent, 230 çlokas. Character, Bengali. Date, Sk. 1702. Place of deposit, District Mayamanasiṁha, Kānihāri, Paṇḍita Mukundacandra Smṛtiratna. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो हरये ।

नत्वा पदाब्जं शिवदं शिवाया विलोक्य कातन्त्रविचारसारम् ।

षत्वे णत्वादेर्विवृतिं विपश्चित्कृते तनोति श्रीमधुसूदनोऽयम् ॥

नेर्विशः । नेः परो विशतौ णत्वादिर्भवति । इत्यादि ।

**End.** न्यक्षतावयवसमुदाये लेकवचनमपि यतिलुनीते येनेति ।

इत्थ टीकायाः समाप्तस्य बलेत्वीत् विदुषां मुदे ।

षत्वादिवृत्तिनेता तु धीमान् श्रीमधुसूदनः ॥ * ॥

**Colophon.** इति षत्वादिवृत्तिः समाप्ता ॥ ० ॥ शकाब्दाः १७०२ ।

**विषयः ।** षत्वादिगणीयधातुरूपकथनम् ।

---

**No. 322.** **सप्तचण्डिका.** Substance, country-made paper, 13½ × 3½ inches. Folia, 10. Lines, 8 on a page. Extent, 290 çlokas. Character, Bengali. Date, ? Place of deposit, District Tripurā, Parganā Sarāil, Vuḍiçvara, Paṇḍita Kṛṣṇakiçora Vidyāvāgīça. Appearance, new. Verse. Generally correct.

**Beginning.** ॐ नमश्चण्डिकायै ।

ॐ चण्डिकेयं चतुर्व्वर्गफलदा साधकेश्वरी ।

कोटिजन्मार्जितं पुण्यं दया श्रद्धा विधीयते ॥

श्रीपार्व्वत्युवाच ।

भगवन् भूतभव्येश त्रैलोक्याधिपते हर ।

यदुपाख्यानमाश्चर्य्यं सौरथेयं वदस्व मे ॥

रुद्र उवाच ।

अस्या रुद्रचण्डिकाया ब्रह्मादय ऋषयोऽनुष्टुप्छन्दश्चण्डिका देवता । इत्यादि

**End.** अतएव महामाये किं वच्मि तव सन्निधौ ।
लम्बोदराधिकां चण्डीं श्रवणात् पठनाद् जनः ।
तत् त्वमसीति वाक्येन ब्रह्मोरपि सुदुर्लभम् ॥ (?)

**Colophon.** इति रुद्रयामले हरगौरीसंवादे रुद्रचण्डिका समाप्ता ॥

**विषयः।** शिवकार्त्तिकेयसंवादेन रुद्रयामलीयरुद्रचण्डिकायाः कवचकथनम् । हरगौरीसंवादमुखेनागमसन्दर्भीयरुद्रचण्डिकान्तर्गतप्रथमपरिच्छेदे चण्डीरहस्यकथनम् । शिवदुर्गासंवादेनागमसन्दर्भे श्रीरुद्रयामलीयरुद्रचण्डिकान्तर्गतमध्यमावच्छेदपटले साधनरहस्यकथनम् । हरगौरीसंवादेन श्रीरुद्रयामलीयरुद्रचण्डिकाया वारभेदे भैरव्यादिमूर्त्तिभेदपूजनात् फलभेदकथनञ्च ॥

---

**No. 323. रुद्रयामलतन्त्रम् .** Substance, country-made paper, 17 x 5 inches. Folia, 195. Lines, 9 on a page. Extent, 5,460 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Vikramapura, Mājhapāḍā, Bābu Rāsavihārī Rāya. Appearance, new. Verse. Generally correct.

**Beginning.** ॐ नमः परमगुरवे ।
आनन्दभैरव उवाच ।
पुरा श्रीपरमेशानीवदनाम्भोजनिःसृतम् ।
श्रीयामलं महातन्त्रं स्वतन्त्रं विष्णुयामलम् ॥
शक्तियामलमाख्यातं ब्रह्मणः स्तुतिहेतुना ।
ब्रह्मयामलवेदाढ्यं सर्वञ्च कथितं प्रिये ॥
इदानीमुत्तराकाण्डं वद श्रीरुद्रयामलम् ।
यदि भाग्यवशाद्देवि तव श्रीमुखपङ्कजे ॥
यानि यानि स्वतन्त्राणि संदृष्टानि महीतले ।
प्रकाशय महातन्त्रं नान्यतन्त्रेषु दृश्यमान् ॥
सर्ववेदान्तवेदेषु कथितव्यं ततः परम् ।
तदा ते भक्तवर्गाणां सिद्धिः सञ्चरते ध्रुवम् ॥ इत्यादि ।

**End.**

शतमष्टोत्तरञ्चास्य पुरश्चर्य्याविधिः स्मृतः ।
न स्नानं न तपः कार्य्यं न पूजादिविधानकम् ॥ ८
केवलं स्तवपाठेनानाहते सुस्थिरो भवेत् ।
चिरजीवी वीरतरो वीतसंसारभावनः ॥
पठित्वा धारयित्वा च योगभ्रष्टो न सम्भवेत् ।
अनायासे योगसिद्धिं प्राप्नोति परमां श्रियम् ॥

**Colophon.** इति श्रीरुद्रयामले उत्तरकाण्डे तन्त्रे महातन्त्रोद्दीपने सिद्धिमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवीभैरवसंवादे स्तोत्रविन्यासो नाम चतुःषष्टितमः पटलः ॥

**विषयः ।** आनन्दभैरवं प्रति आनन्दभैरव्या उक्तिरूपोऽयं निगमः । तत्र यामलशब्दव्युत्पत्ति-कथनम् । तन्त्रपाठमाहात्म्यकीर्त्तनम् । भावशब्दनिर्व्वचनम् । तत्र प्रसङ्गात् सुरापानविधिः । दिव्यवीरपशुभावभेदात् भावस्य त्रैविध्यनिरूपणम् । दिव्यभाववीरभावपशुभावेषु सिद्धिक्रमनिरू-पणम् । पशूनां रात्रिकर्म्मनिषेधः । विशेषतो वीरभावदिव्यभावयोर्निरूपणम् । कलौ भावविशेष-विधिः । गुरूपसदनविधिः । तत्र गुरुमन्त्रदेवतादिस्वरूपकथनञ्च । अथ कुलाचारविधौ व्रतभङ्ग-प्रायश्चित्तादिः । पशुभावनिर्णयः । गुरुस्तोत्रादिकथनम् । दीक्षादिविधिः । सर्व्वासां विद्यानां दीक्षासु चक्रनिरूपणम् । तत्र कालाकालविचारचक्रम् । अकडमचक्रम् । ताराचक्रम् । राशि-चक्रम् । कूर्म्मचक्रम् । शिवचक्रम् । विष्णुचक्रम् । ब्रह्मचक्रम् । श्रीचिद्शात्मकचक्रम् । ऋणिधनि-सम्बन्धचक्रम् । उल्काचक्रम् । चक्रसारराशिचक्रम् । चतुश्चक्रम् । शुद्धचक्रम् । अकथहचक्रम् । अरिमन्त्रविसर्ज्जनविधिः । वर्णमालाकथनम् । कुण्डलिनीस्तोत्रम् । भावसङ्केतकथनम् । कौलिकस्य दिव्यभावावश्यकताकथनञ्च । अथ कुमारीपूजाकथनम् । तत्र कुमारीमन्त्रोद्धारादिविधिः । कुमारीमन्त्रजपहोमादिविधिः । कुमारीस्तोत्रम् । कुमारीकवचम् । कुमारीसहस्रनामस्तोत्रञ्च । अथ स्वरोदयादिकालनिरूपणम् । तत्र प्रश्नसारचक्रम् । आशाचक्रम् । सन्ध्याकालादि-कथनम् । आशाप्रश्नार्थभाववर्णविन्यासः । भावचक्रकथनम् । वेदशाखापल्लवकथनम् । आशा-चक्रस्य हतीयदलनिरूपणम् । अथर्व्ववेदलक्षणम् । ब्रह्मज्ञानकथनम् । सुरामांसादिस्वरूप-व्याख्यानम् । कामचक्रवर्णनम् । षडाधारभेदकथनम् । सिद्धमन्त्रविवेचनम् । वीरभावमाहात्म्य-कथनम् । षट्चक्रफलोदयकथनञ्च । अथ योगसाधनविधिः । वृहद्धंसमन्त्रः । हंसप्रणव-व्याख्या । ब्रह्ममार्गनिरूपणम् । आसनभेदकथनम् । योगशास्त्रार्थनिरूपणम् । योगसाधन-विधिः । प्राणायामस्वरूपादिकथनम् । जपविधिः । ध्यानविधिः । कुण्डलिनीध्यानविधिः । दिव्यध्यानविधिः । ब्रह्मतत्त्वनिरूपणम् । त्रिविधध्यानकथनम् । तर्पणविधिः । होम-विधिः । अभ्यर्चनविधिः । पञ्चमकारविधिः । अष्टाङ्गयोगः । समाधिमाहात्म्यम् । शुक्लकृष्ण-पक्षभेदात् प्राणायामचिन्तनविधिः । प्रत्याहारादिफलकथनम् । वैष्णवानां परमपुरुषज्ञानम् ।

मन्त्रसिद्धिलक्षणम् । कन्दवासिनीस्तोत्रम् । षट्चक्रयोगः । महाकालमूलपद्मविवेचनम् । मनुष्य-जन्मप्रशंसा । धौतिनेत्यादियोगः । चैतन्यकुण्डलिनीसहस्रनामकथनम् । स्वाधिष्ठानस्वरूपादि-कथनञ्च । अथ श्रीकृष्णसाधनविधिः । भेदिनीसाधनविधिः । कुण्डलिनीकवचम् । विजया-विधिः । राकिणीस्तोत्रम् । तत्साधनक्रमः । रुद्राणीस्तोत्रम् । अथामृत्युञ्जयविधानम् । महा-रुद्रस्तवः । लाकिनीस्तोत्रम् । सप्तस्वर्गनिरूपणम् । तत्र तत्र पद्मादिभावनिरूपणम् । मणिपूरानु-क्रमः । मन्त्रार्थचैतन्यम् । पञ्चद्रव्यादिसाधनविधिः । निर्गुण्डीशोधनविधिः । सिद्ध्यष्टकमाहात्म्यम् । काकिनीसहस्रनामकथनञ्च । अथ भेदिनीस्तोत्रम् । छेदिनीस्तोत्रम् । कुण्डलिनीध्यानादिः । कुण्डलिनीस्तवः । कुण्डलिनीकवचम् । पञ्चासवपानविधिः । कुण्डलिन्या अष्टोत्तरसहस्रनाम-कथनञ्च । अथ श्रीकृष्णराकिणीकथनम् । तत्र मन्त्रोद्धारादिविधिः । ततो नरसिंहमन्त्रः । श्रीकृष्णमन्त्रः । श्रीकृष्णध्यानम् । तत्पूजाविधिः । श्रीकृष्णस्तवः । श्रीकृष्णकवचम् । षड्दल-स्थितषड्वर्णस्तोत्रम् । राकिणीतर्पणादिविधिः । श्रीकृष्णराकिणीसहस्रनामकथनम् । मणिपूर-भेदकथनम् । लाकिनीस्तोत्रम् । डादिफान्तवर्णध्यानादिः । महारुद्रशक्तिस्तोत्रम् । मृत्युञ्जय-मन्त्रोद्धारप्रकारश्च । अथ श्रीकण्ठमातृकान्यासादिः । पीठन्यासश्च । अथ रुद्रपूजाविधानम् । रुद्रशक्तिपूजाविधिः । रुद्रस्तवः । मृत्युञ्जयपूजाविधिः । मृत्युञ्जयस्तोत्रम् । लाकिनीस्तोत्रम् । मृत्युञ्जयलाकिनीकथनम् । तस्या अष्टोत्तरशतनामकथनम् । तस्याः सहस्रनामकथनञ्च । मन्त्रार्थ-चैतन्यविन्यासविधिः । काकिनीसिद्धिकथनम् । काकिनीस्तोत्रम् । अनाहतपद्मेश्वरस्तोत्रम् । ईश्वरस्तोत्रञ्च ।

---

**No. 324.** रूपप्रकाशः. By कुल्लुकभट्टः. Substance, country-made paper, 17×6 inches Folia, 9. Lines, 8 on a page. Extent, 333 çlokas. Character, Bengali. Date, ? Place of deposit, District Vā̃kuḍā Viṣṇu-pura, Paṇḍita Raghurāma Tarkaratna. Appearance, fresh. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

नानागणानवगतव्यवहारयोग्य-
धातुव्रजानधिगमोत्थतमःशमाय ।
रूपप्रकाशमकरोद्धि विशालवर्णो
धातुप्रदीपमनु कुल्लुकभट्टधीरः ॥
कल शब्दसंख्यानयोः । आत्मनेपदी भुवादौ कलते । कल गतौ संख्याने
चुरादावदन्तः कलयति । इत्यादि ।

**End.** ऋ गतिप्रापणयोः भुवादौ ऋच्छति । ऋ लृ गतौ इयर्त्ति । ऋ गतौ ऋणोते । ऋणु दीप्तौ तनादौ ऋरितेत् ऋणोति ऋर्णुते ऋणोति ऋणुते इति । संज्ञा-पूर्व्वकत्वात् अत्र गुणाभावः । ऋधु इद्धौ राध्नोति । ऋ । ऋज्ज दीप्तौ । भुवादावात्मनेपदौ ऋजते ।। ऋज्ज कम्पने भुवादौ ऋजति । चुरादौ च ऋजयति ।

**Colophon.** इति श्रीकुसुकभट्टकृतरूपप्रकाशः समाप्तः ॥ * ॥ श्रीरामाय नमः ।

**विषयः ।** धात्वर्थनिरूपणमुखेन धातुरूपादिनिरूपणम् ।

---

**No. 325.** ललितावली. By दिगम्बरभट्टः. Substance, country-made paper, 14½ × 3¼ inches. Folia, 5. Lines, 6 on a page. Extent, 99 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Parganā Sonārgā̃, Post Office Vaidyervāzār, grāma Sātbheyepāḍā, Paṇḍita Nīlakamala Smṛtibhūṣaṇa. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

मेदिन्यादीनि कोषाणि समालोक्य प्रयत्नतः ।
श्रीदिगम्बरभट्टेन क्रियते ललितावली ॥
इयं कृता प्रयत्नेन सतां काव्यविदां मुदे ।
लीयतामात्नि शब्दानामेकत्वामवतामपि ॥
भेके मद्ये ऋतौ गर्ध्ने नागे सिंहे कपालके ।
चन्दने मधुकौसुम्भे हरिरित्यभिधीयते ॥
मेघे वर्णे ... दीप्ते रौद्रे भङ्गारभावने ।
शुकशाल्मलके चैव आतपः परिकीर्त्तितः ॥
भीतः शङ्के च घोषे च प्रत्ताक्षे ... ... ।
भगने दिग्गजे चैव कीर्त्ति हस्त्यादिभाषणे ॥
आलवर्ते द्विजे वर्षे प्राङ्गनादिकपावने ।
कुठारे ... वज्रे च वाढशब्दः प्रकीर्त्तितः ॥ इत्यादि ।

**End.** धान्ये लीकरणे चैव वातादिकनिवर्त्तने ।
वत्सरे च पुरस्कारे मननं परिगीयते ॥

ईवे च सुरभौ चैव वारिकुम्भे चरे नखे ।
मृद्दारके च गगने नाकशब्दोऽभिधीयते ॥
दिवसे पिङ्गलानाम्नां ... ... ... ... ।
पुत्रे ...... प्रवीणे च प्रासे गौरवभाषणे ॥.
ऐश्वर्य्ये मधुरे चैव पुरः सर्व्वत्र कथ्यते ।
पाकपात्रे च सप्तम्यां भैरवे घोटके पथि ॥
पिप्पल्यां मुषले कच्छे चयः सर्व्वत्र गीयते ।
शाकभेषजकाके च शीघ्रगे ... ... ... ।
आश्चर्य्ये घोरनादे च मुनिनार्य्यां रिपुक्षये ॥
कुक्कुरे गजविष्ठायां श्वाशब्दः परिकीर्त्तितः ॥

**Colophon.** (खण्डितशेषत्वात् समाप्तिसूचकं वाक्यं नास्ति ॥)

**विषयः।** नानार्थ-द्व्यर्थ पर्य्यायबोधकमभिधानम् ।

---

**No. 326. लाघवज्ञानम्.** Substance, country-made paper, $18\frac{1}{2} \times 3\frac{1}{2}$ inches. Folia, 4. Lines, 8 on a page. Extent, 236 çlokas. Character, Bengali. Date, ? Place of deposit, District Bharidpur, Post Office Pālang, grāma Dhānukā, Paṇḍita Kāliçaṇkara Vidyābhūṣaṇa. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ महानसीयवह्नित्वादिना व्यापकताज्ञानं विनापि शुद्धवह्नित्वादिना व्यापकताज्ञानस्य महानसीयवह्नौ लाघवादिति लाघवज्ञानसहकारेण महानसीयवह्निभिन्नवह्न्यभाववानितीतरबाधकसहकारेण महानसीयत्वविशिष्टवह्नित्वादिरूपेण तादृशवह्न्यादिविधेयकानुमितिजनकत्वात् तादृशानुमितौ लाघवज्ञानेतरबाधयोर्हेतुत्वं कल्पनीयं। अन्यथा तच्छून्यकालेऽपि तथाविधानुमित्यापत्तेः । न चैवं लाघवज्ञानस्यानुमितौ महानसीयवह्नित्वावच्छिन्ननिरूपितव्याप्यावगाहिपरामर्शस्य व्यभिचारतेति वाच्यं अन्यलिङ्गकानुमितौ व्यभिचारवारणाय परामर्शजन्यतावच्छेदककोटौ तल्लिङ्गकपरामर्शाव्यवहितोत्तरत्वनिवेशेन व्यभिचाराभावात् । एवं तादृशपरामर्शजन्यानुमितौ लाघवज्ञानादीनां व्यभिचारवारणाय लाघवज्ञानजन्यतावच्छेदककोटावपि तदव्यवहितोत्तरत्वं निवेशनीयम् । यच्च तादृशलाघवज्ञानस्य कार्य्यतावच्छेदकविशिष्टवैशिष्ट्यविषयत्वं परामर्शजन्यानुमितौ च विशेष्ये विशेषणमिति रीत्येव महानसीयवह्न्यादिभानमिति न व्यभिचारः ॥ इत्यादि ॥

End. तन्मतेऽपि तादृशपरामर्शस्य स्वतन्त्रहेतुताया आवश्यकत्वम् । तथाहि तन्मते स्वनिष्ठायाः स्वावच्छिन्नप्रकारतानिरूपितप्रतियोगित्वनिष्ठसांसर्गिकविषयता-वच्छिन्नाभावत्वावच्छिन्नविषयतावच्छिन्नविशेष्यताकत्व—सम्बन्धावच्छिन्ना प्रति-योगितावच्छेदकता तन्निरूपकभेदवत्त्वव्याप्तिप्रकारतानिरूपितस्वावच्छिन्नप्रका-रतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकत्वोभयसम्बन्धेन किञ्चिद्धर्मविशिष्टत्व-मेव निश्चयत्वं निवेश्य परमसम्बन्धघटकस्वनिष्ठावच्छेदकता स्वनिरूपकप्रका-रतानिरूपितत्वसम्बन्धेन व्याप्यत्वनिष्ठावच्छेदकताभिन्नावच्छेदकता विशिष्टा- ...... निवेश्या ...............................................
हेतुत्वस्य तादृशनिश्चयविशिष्टतावच्छिन्नं प्रति क्लृप्तत्वात् तादृशकार्य्यतावच्छेद-काक्रान्तत्वादनुमितेरपि तत एवोपपत्तेः । मन्मतेऽपि स्वतन्त्रहेतुताकल्पनापि नास्तीति मत्तानसीयत्वादिविषयत्वमनुमितौ निर्युक्तिकमेवेति संक्षेपः ।

Colophon. इति लाघवज्ञानस्य समाप्तः ।

विषयः । गुरुलघुभेदेन वस्तूनां द्विविधज्ञानमस्त्येव । तत्रास्मिन् लाघवज्ञानस्यैव सम्यग् विचारः ।

---

No. 327. वर्णजातिसङ्करमाला (पराशरपद्धतीया). By भार्गवरामः. Substance, country-made paper, 13 × 3 inches. Folia, 2. Lines, 8 on a page. Extent, 64 çlokas. Character, Bengali. Date, ? Place of deposit, Nalkōḍā *viâ* Vaçirhāṭ, Paṇḍita Prasannacandra Bhaṭṭācāryya. Appearance, tolerable. Verse. Generally correct.

Beginning. ॐ नमो गणेशाय ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वर्णाश्चतुर्विधाः ।
वर्णानां सङ्करोत्पत्तिं निशामय महाशय ।
आदौ विष्णोर्मुखाज्जाता ब्राह्मणा वेदपारगाः ॥
बाह्वोश्च क्षत्रिया जाता ऊर्व्वोर्वैश्या धनान्विताः ।
पद्भ्यां शूद्राश्च सम्भूतास्त्रिवर्णस्य च सेवकाः ॥ इत्यादि ।

End. तीवरोद्भव च दासत्वं चाण्डालाय ततः परम् ।
चर्म्मकाराय च काण्डाय स्वतपाय च म्लेच्छजातये ॥ (?)
इमां क्रियां भार्गवरामगीतां
योऽप्यन्यथा मूढजनः करोति ।

तस्योत्तमाङ्गे खलु वज्रपातः
पतेत् सदा युक्ति भृगोः कुठारः ॥ (?)

**Colophon.** इति पराशरपद्धतौ भार्गवरामकृतौ वर्णजातिसङ्करमाला समाप्ता ॥ ० ॥

**विषयः ।** ब्राह्मणाद्युत्पत्तिनिरूपणमुखेन सङ्करजातिनिरूपणम् ।

---

**No. 328.** वर्णप्रकाशः. By कर्णपूरगोस्वामी. Substance, country-made paper, 17 x 3 inches. Folia, 10. Lines, 6 on a page. Extent, 225 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Post Office Sonārgā̃, Purāpāḍā, Paṇḍita Kālikānta Çiromaṇi. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

कलुषघट्टीनो रसः सुरारे-
र्मखद्विजतादस्वगालिकैतवेन ।
विनिश्चितमयमानयत्नपदं (?)
निखिलनरं नरकेश्वरी पुनातु ॥
साधारणसुधाभोगैर्विविधैर्विबुधालयैः ।
पुरन्दरपुरीवान्या धन्यास्ति वैपुरी पुरी ॥
सोमसन्तानसम्भूतः पुरुहूत इवापरः ।
तस्या अमरमाणिक्यनामाभून्नृपनायकः ॥
कमलानन्दिनोऽनन्तकैरवक्षमकारिणः ।
सर्व्वे एवाभवन् शूराः पौरा यस्य प्रभावतः ॥
स्थिते रतः समस्तानां भूतानां भूतिभूषितः ।
तस्य राजधरो नाम सूनुः स्थाणुरिवाजनि ॥
शब्दशास्त्रातिशूरेण कर्णपूरेण सूरिणा ।
अयं तस्यानुबन्धेन निबन्धः क्रियते मया ॥
आनन्दनो ... ... यशानां दानदायकः ।
कर्णपूरकविः कश्चि ... ... न रोचते ॥
सन्देहध्वान्तसन्दोहच्छन्ने विज्ञानचक्षुषि ।
वर्णप्रकाशदीपेन लिपिकर्म्म प्रयुज्यताम् ॥

पुराणयमकस्तेषाम् कोषानेकोनविंशतिम् ।
धातुवृत्ति ... ... ... समाहृत्यायमुच्यते ॥
... ... ... जयजव्यकजीवनं जवनं जवः ।
जिष्णुगो क्षणं क्षणा जनको जननं जनः ॥ इत्यादि ।

**End.** मूर्द्धन्ये च नखा हन्ये नारीवरणमीरितम् ।
स्याच्छिरौषवनं ... ... ... पणसस्तथा ॥
तथा श्रीच्छिवणश्चैव चीर ... ... प्रकोपणम् ।
प्रणिपक्षः ... ... ... प्रणिंसकश्च काकिणी ॥
भवेत् प्रनिंसकश्चैव प्रणिन्द्याश्च तथैव च ।
वक्रणदी सुरापाणं तथा वक्रनितम्बकः ॥
गिरिनद गिरिनदी तथा गिरिनितम्बकः ।
परायनीत्यादि पुनः प्रोक्तः शिष्टप्रयोगतः ॥

**Colophon.** इति त्रिपुरपुवङ्गतामरमाणिक्यमहामात्य श्रीकण्ठपूरकृते वर्णप्रकाशे मूर्द्धन्यणकारप्रकरणम् ॥

**विषयः ।** यकारनकारणकारादिवर्णानां वर्गीयान्तःस्थताविचारः । तत्र प्रथमं वर्गीयान्तःस्थ-ज (य) कारनिरूपणम् । तत्र वर्गीयजकारनिरूपणम् । एकद्विव्यक्षराक्षरवर्गीयजकारनिरूपणम् । एकद्विव्यक्षराक्षरान्तःस्थयकारप्रकरणम् । मूर्द्धन्यनकारप्रकरणम् । तत्र एकद्विव्यक्षराक्षरमूर्द्धन्यणकारनिरूपणम् । दन्त्यनकारप्रकरणम् । तत्र एकद्विव्यक्षराक्षरदन्त्यनकारनिरूपणञ्च । इति ।

---

**No. 329.** वादमाला. By जयतीर्थ. Substance, country-made paper, 12 x 6 inches. Folia, 25. Lines, 9 on a page. Extent, 727 çlokas. Character, Nāgara. Date, ? Place of deposit, Kāçidhāma, Khālispurā, Paṇḍita Priyanātha Tattvaratna. Appearance, tolerable. Prose. Correct.

**Beginning.** श्रीवेदव्यासाय नमः । शुभमस्तु ।
नमोऽशेषगुणपूर्णाय विष्णवे ।
सत्याशेषजगज्जन्मपूर्वकर्त्रे सुरद्विषे ॥
ननु कथं सत्यं जगद्रक्षाकाराधिकारित्वो विमतं मिथ्याऽस्मत्वात् जड़त्वात् परिच्छिन्नत्वात् शुक्तिरूप्यवत् इत्यनुमानविरोधात् नैवम् । इत्यादि ।

**End.** प्राङ्मुखात् वाङ्मुखात् भूयात् प्रीत्यै माधवमध्वयोः ।

**Colophon.** इति श्रीमद्वादिमाला जयतीर्थमुनिविरचिता ।

**विषयः** । माध्वाभ्यर्थमतादीनां विशदीकरणम् ।

---

**No. 330.** **वादिभूषणम्.** By **पुरुषोत्तमाचार्य्यः.** Substance, country-made paper, 12 × 3 inches. Folia, 8. Lines, 9 on a page. Extent, 274 çlokas. Character, Nāgara. Date, ? Place of deposit, District Vāṅkuḍā Viṣṇupura, Paṇḍita Rāmānuja Bhaṭṭācāryya. Appearance, tolerable. Prose. Generally correct.

**Beginning.** श्रीगणेशाय नमः ।

पूर्णबोधसुखरूपदैवं पूर्णभक्तिहृदयाम्बुजगेहम् ।
तं जगज्जननसंहृतिहेतुं नौम्यहं यदुपतिं गतदोषम् ॥
न्यक्कृत्य बन्धमिथ्यात्वं रचिता वेदमानता ।
सूत्रव्याख्या कृता येन पूर्णबोधं नमामि तम् ॥
यद्वाणी भवसन्तापक्षपाणीव सदा सताम् ।
नत्वा जयार्यं संनौमि विद्याधीशमुखान् गुरून् ॥
प्रणम्य पितरौ भक्त्या पितृव्यं तत्प्रपूजितम् ।
करिष्ये बन्धमिथ्यात्वदूषणं वादिभूषणम् ॥
ननु सर्व्वागमानामद्वितीयपरत्वान्यथानुपपत्त्या बन्धमिथ्यात्वमवश्यमभ्येतव्यम् ।
इत्यादि ।

**End.** तथा सति वैदिकबन्धेऽपि तदभावेन मिथ्यात्वानुपपत्तिः न चोभयोराविघकवेदवेद्यत्वेऽपि बन्धमिथ्याविद्यकत्वात् मिथ्यात्वं न प्रमाण इति वाच्यं वेदाप्रामाण्यानिस्तारात् । तस्मात् बन्धमिथ्यात्वखण्डनं वेदप्रामाण्यानुकूलमिति सिद्धम् ।

**Colophon.** इति श्रीपुरुषोत्तमाचार्य्यविरचितं वादिभूषणं समाप्तम् । श्रीरामानुजाय नमः ।

**विषयः** । विचारमुखेन बन्धमिथ्यात्वखण्डनादिः ।

---

**No. 331.** **वासन्तीविवेकः.** By **शूलपाणिः.** Substance, country-made paper, 18 × 3½ inches. Folia, 19. Lines, 6 on a page. Extent, 306 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamana-

siṁha Serapura, Paṇḍita Durgāsundara Kṛtiratna. Appearance, tolerable. Prose and verse. Generally correct.

**Beginning.** अथ कामरूपीयनिबन्धोक्ता वासन्तीपूजाव्यवस्था । अत्र विशेषानुक्तौ शरदुक्त-
प्रमाणो धनस्थः । यथा भविष्ये ।
विशेषानभिधानात्तु शरदुक्तक्रमो मयः ।
इत्थ बोधनं विनैव पूजा कार्य्या ॥ इत्यादि ।

**End.** अत्रामन्त्रणाधिवासौ पत्रीप्रवेशाव्यवहितपूर्व्वदिने षष्ठीं विनापि सायं कार्य्यौ दोलयात्राव्यवहितपूर्व्वदिने चतुर्दशीं विनापि बह्वृत्सव इति विहतम् ॥ दोलयात्राविवेकः ।

**Colophon.** इति शूलपाणिकृतो वासन्तीविवेकः समाप्तः ॥

**विषयः ।** वासन्तीपूजाव्यवस्थामुखेन तत्पूजाप्रकरणादिनिरूपणम् ।

---

**No. 332.** **विधानमाला.** Substance, country-made paper. Folia, 47. Lines, 8 on a page. Extent, 600 çlokas. Character, Nāgara. Place of deposit, Benares Govardhanasarāi, Paṇḍita Vindhyeçvarīprasāda Dūbe. Appearance, old. Prose and verse. Incorrect.

**Beginning.** श्रीगणेशाय नमः । अथ विधानमालारम्भः ॥
प्रणम्य लम्बोदरमातरं तां सन्तोषदां सर्व्वपुराणदृष्टाम् ।
धर्म्मार्थकामध्यवचारसिद्ध्यै करोमि शुद्धार्थविधानमालाम् ॥
तत्र आदौ पुष्पवतीविधानं लिख्यते । इत्यादि ।

**End.** खण्डितत्वात् शेषो नास्ति ।

**विषयः ।** गर्भिणीनां बालकानाञ्च भूतप्रेतादिकृतोपद्रवशान्तिः ।

---

**No. 333.** **विभक्तितत्त्वम्.** By **रमाकान्तचक्रवर्त्ती.** Substance, country-made paper, 18 × 1¼ inches. Folia, 56. Lines, 4 on a page. Extent, 1,176 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Parganā Sonārgā, Post Office Vaidyervāzār, grāma Candrakirti, Paṇḍita Rajanīkānta Bhaṭṭācāryya. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

प्रणम्य गौरीममलात्मधाम्नीं
गुरुञ्च मोक्षस्य निदानमाद्यौ ।
विभक्तितत्त्वार्थमिदं विचित्रं
तनोमि हेतोः कृपया हि धातुः ॥
इमं ग्रन्थं दृष्ट्वा बधि कुरुत दोषाय च मतिं
रमाकान्ते यस्मात् सुबुधगणभक्त्ये कृतमिति ।
कदाचिद्दोषः स्यात्तदपि च हि कुर्य्यात् स दयया
निरङ्कं साधूनां ननु चरणचुम्बेति दयिता ॥ (?)

प्रथमा । व्याकरणं हि शक्तिग्राहकं । ततः वृक्ष इत्यादिपदज्ञानजन्यपुंस्त्व-सांसर्गिकैकत्वसमानाधिकरणवृक्षत्वावच्छिन्नो वृक्ष इति श्रोतुर्बोधे प्रकृतेः प्रत्ययस्य वा कस्मिन् खण्डे शक्तिरिति बालं बोधयन्नाह प्रथमेति । लिङ्गं हि वस्तु-विषयकज्ञानकारणीभूतधातुविभक्तिभिन्ननिष्ठशक्तिमत् । तस्यार्थे तन्मात्रज्ञान-जन्यज्ञानविषयीभूते विशेष्यत्वेन प्रतीयमाने प्रथमा इत्यर्थे स्वार्थविशिष्टद्रव्यस्य अर्थान्तरविशिष्टत्वेन तत्प्रतिपादिका प्रथमेत्यायातम् । ननु स्वार्थविशिष्ट-द्रव्याभिधेये यदि प्रथमा तदा "राज्ञः पुरुषः" इत्यादौ राजन् शब्दात् पुंस्त्वाद्यर्थविशिष्टराजनिरूपितस्वत्ववानिति बोधेऽप्यर्थान्तरपुंस्त्वादिविशिष्टत्वेन प्रतीयमानत्वात् कथं प्रथमा स्यात्, स्वार्थविशिष्टार्थेन यदि शब्दान्तरार्थो न विशिष्यते तदा प्रथमा इति वचनग्रहणाद्व वक्तव्यमिति । तथाचाह ।
"अर्थान्तरैरसम्भिष्टो लिङ्गस्यार्थो भवेद्व यदि ।
प्रथमा स्यात्तदेवापि तावन्मात्रविवक्षया ॥" इति ।
अन्यथा लिङ्गार्थे प्रथमा इति कृते सिध्यति किं वचनग्रहणेन । इत्यादि ।

**End.** "तत्तेन सह युक्तार्थं यत् पदं यदपेक्ष्यते ।" इति ।
"ऐकार्थ्यं पृथगर्थानां वृत्तिं युक्तार्थतां विदुः ।
पदानां प्रत्ययैर्योगः समासश्चेति वृत्तयः ॥"
पृथक्शक्तिप्रतिपाद्यार्थानां एकशक्तिप्रतीतिविशेषं यत्तां युक्तार्थतां वृत्तिं विदुरित्यर्थः । महती चिन्ता गौर्यस्य इति वाक्ये महत्पदापेक्षया समास इति । न च महत्पदस्य समासान्तर्निविष्टविशेष्यपदान्वितत्वमिति वाच्यम्, समासार्थापेक्षया गोशब्दार्थस्यापि विशेषणत्वात् । तथा चोक्तं ।
"प्रतियोगिपदादन्यत् यदन्यत् कारकादपि ।
वृत्तिशब्दैकदेशस्य सम्बन्धस्तेन नेष्यते ॥"

सापेक्षत्वादित्यर्थः । वाक्यप्रकृतिसमासपक्षे दृत्तिरपि नेष्यत इत्याह ।

"कारकप्रतियोगिभ्यां यद्वृयदन्यदपेक्ष्यते ।

सर्वाङ्गकलकादेव दृत्तिस्तत्र तु नेष्यते ॥" इति ।

नित्यसमासपक्षे तु समस्तपदस्य विशेषणार्थेन सहान्वय इति । ... ... ...

.................................नीललोचितपङ्क्तौ इत्यादौ स्याद्यन्त-

समासे "स्त्रियामादौ" इति कृते नीललोचिते इति प्रयोगः स्यात्, सत्यं

स्याद्यन्तस्यादिप्रकृत्यन्यतरार्थोपस्थापकं नाम ... ... ... ... देनेति यत्र

निर्देशः तत्र पदेनैव समास इति ॥

Colophon. इति श्रीरमाकान्तचक्रवर्त्तिविरचितं विभक्तितत्त्वं समाप्तम् ॥

विषयः। कातन्त्रसूत्राणि परिशिष्टकारिकाः शब्दशक्तिप्रकाशिकाकारिकाः कातन्त्र-व्याख्यानग्रन्थसमुदायांशविशेषांश्चोद्धृत्य वादार्थरीत्या प्रथमादिविभक्तीनामर्थस्य प्राञ्जलालोचनम् । संक्षेपतः समासलुप्तविभक्त्याद्यर्थालोचनञ्च ।

---

No. 334. विराटपर्व्वटीका (भावार्थप्रकाशिका). By रामकृष्णः. Substance, country-made paper, 12 × 3½ inches. Folia, 12. Lines, 8 on a page. Extent, 348 çlokas. Character, Bengali. Date, ? Place of deposit. District Mayamanaṣiṁha Vāḍari, Paṇḍita Çivacandra Nyāyabhūṣaṇa, Appearance, old. Prose. Incorrect.

Beginning. ॐ नमः शिवाय ।

भगवन्तं नमस्कृत्य भक्त्या च कामदं हरिम् ।

विराटपर्व्वव्याख्यानं रामकृष्णेन तन्यते ॥

अथ धर्म्मादेव विपन्निस्तारार्थं परमविपत्तावपि धर्म्मो न त्याज्य इति बोधयितुं युधिष्ठिरं प्रति ज्ञापनरूपैककार्य्यत्वसङ्गत्या भगवान् द्वैपायनस्तुरीयं पर्व्व-मारभते जनमेजय उवाचेति । इत्यादि ।

End. अभिषङ्गमादिति पाठे अभिषङ्गः पराभवः ।

यत् कृत्यं मत्कृत्यं पर्य्याप्तञ्च । अनन्तरं शीघ्रं गत्वा स्वीकृत्य । परिवर्हं उपायनम् । मैरेयं मधुतोलिकाः पानिविशिकाः । सर्व्वं सकलं जीवितञ्च । कृते कारिते ॥ विराटपर्व्वण्यभिमन्युविवाहः । समाप्तञ्चेदं विराटपर्व्व अनन्तरमुद्योगपर्व्व भविष्यति ।

**Colophon.** इति विरोधभञ्जिन्यां भावार्थप्रकाशिकायां विराटपर्व्वव्याख्या समाप्ता ।

**विषयः ।** महाभारतीयविराटपर्व्वव्याख्यानम् ।

---

**No. 335.** विवादार्णवसेतुः. Substance, country-made paper, 13 × 5 inches. Folia, 149. Lines, 9 on a page. Extent, 5,783 çlokas. Character, Bengali. Date, ? Place of deposit, District Vākuḍā Viṣṇupura, Paṇḍita Rūparāma Bhaṭṭācāryya. Appearance, fresh. Prose. Generally correct.

**Beginning.** ॐ श्रीकृष्णाय नमः ।

विश्वेषां शरणं नवाम्बुदरुचिः सद्भक्तचिन्तामणि-
र्यः प्रत्यूहतमोविनाशमिहिरः कौमारभीनाशनः ।
संसारैकमहार्णवे निपततां विस्तारवीजं नृणां
गोविन्दः कृपया सुरासुरगणैर्वन्द्याङ्घ्रिरं पातु वः ॥
चण्डेश-विश्वेश्वर-विश्वरूपा मिताक्षराकार-हलायुधौ च ।
श्रीकृष्ण-वाचस्पति-धर्म्मरत्नकृतस्तथा श्रीकरशूलपाणी ॥
गोविन्द-लक्ष्मीधर-तत्त्वकारा आचार्य्यचूडामणिना च भट्टः ।
वाक्यानि चैषां सुविमृश्य कुर्म्मो ग्रन्थं विवादार्णवसेतुबन्धम् ॥
इह शाखानि वर्णाद्यैः स्थितस्य च हेतयः ।
राजप्रशंसा तच्चैव मन्त्रि-दूतादिलक्षणम् ॥
राजधर्म्म व्यवादानं दृष्ट्यादिविधिलक्षणकाः ।
व्यवादानोद्भवयोर्विधिर्दायनिरूपणम् ॥
व्रतादीनां तच पुंसामधिकारिविवेचनम् ।
स्त्रीधनस्य निर्णयस्तदधिकारिनिरूपणम् ॥
भागानर्हश्च दायानामविभाज्यविभाज्यता ।
पितृकृत्यविभागश्च भ्रातृभागविधिस्तथा ॥
संसृष्टानां विभागश्च विदेशागतवण्टनम् ।
मिश्रितस्य विभागश्च भागसन्देहनिर्णयः ॥
भुक्तिव्यवहारलक्षणादि भाषापादस्ततःपरम् ।
उत्तरपादक्रियापादौ ततो निर्णयपादकः ॥
साक्ष्यादिनिर्णयश्चैव ततः क्रियावसानकम् ।
निक्षेपविधिरन्यौ विक्रये च विधिस्तथा ॥

विधिस्तत्र सम्भूय समुत्थानेऽत्र भण्यते ।
कर्षकादेर्भागविधिस्तथा दत्ताप्रदानिकम् ॥
अथादेयदेयदत्तादत्तानां विधिरुच्यते ।
भृतकानां विधिस्तत्र दास्यमोक्षाधिकारिणौ ॥
वेतनस्यानपाकर्म्म स्वामिपालविधिस्तथा ।
पण्यस्त्रीविधिरत्रैव गृहादिभाटको विधिः ॥
विक्रिया सम्प्रदानञ्च क्रीत्वानुशयनिर्णयः ।
सीमाविवादे च विधिः क्षेत्राक्षेत्रे विधिस्तथा ॥
शस्यरक्षाविधिस्तत्र शस्यघातादयस्तथा ।
शस्यघातेऽप्यदण्ड्याश्च वाक्पारुष्ये विधिस्तथा ॥
विधिश्च दण्डपारुष्ये तथा स्तेयनिरूपणम् ।
प्रकाशतस्करदमोऽप्रकाशचौर्य्यदण्डनम् ॥
चौरान्वेषणचौरातिदेशापवादनिर्णयः ।
साहसे तु दण्डभेदो घातकान्वेषणं ततः ।
स्त्रीसंग्रहणतद्दण्डौ परदारागमे दमः ॥
स्त्रीपुंधर्म्मनिर्णयश्च तथा द्यूतसमाह्वयः ।
ऋणादिषु विवादेषु प्रकीर्णकमतःपरम् ॥
बहुधा विषयस्तत्र विधिर्दण्डाश्रितः पुनः ।
अथ वर्णादिवृत्तिः । तत्र महाभारते युधिष्ठिरं प्रति भीष्मवाक्यम् ।
महाभूतानि भूतात्मा महात्मा पुरुषोत्तमः ।
वायुर्ज्योतिस्तथा चापः खञ्च गाञ्चान्वकल्पयत् ॥ इत्यादि ।

**End.** अष्टापाद्यमित्यस्याष्टभिरापद्यते गुण्यते इत्यष्टापाद्यमष्टगुणम् । किल्बिषदण्ड-बाधनम् । तद्दोषगुणवदिति सर्व्वत्रान्वितम् । तेन यत्र स्तेयदण्ड उक्तः । य स्तेयदोषगुणतः तस्य शूद्रस्याष्टगुणः । तादृशवैश्यस्य षोडशगुणः । तादृश-क्षत्रियस्य द्वात्रिंशतिगुणः । तादृशब्राह्मणस्य चतुःषष्टिगुणः । ततोऽप्यधिक-तरगुणस्य ब्राह्मणस्याष्टविंशत्यधिकशतगुण इत्यर्थ इति रत्नाकरादयः ।
मनुः । स्तेयाः सुरापा ब्रह्मघ्ना गुरुदाराभिगामिनः ।
न सन्ति यस्य राष्ट्रेषु स राजा शक्रलोकभाक् ॥
मनुः । अनेन विधिना राजा मिथ्या विवदतां नृणाम् ।
साक्षिप्रत्ययसिद्धानि कार्य्याणि समतां नयेत् ॥

उदितो विस्तरेणायं मिथ्या विवदमानयोः ।
अष्टादशसु मार्गेषु व्यवहारविनिर्णयः ॥
एवं कार्य्याणि सर्व्वाणि सम्यक् ज्ञात्वा महीपतिः ।
देशानलब्धाँल्लिप्सेत लब्धांश्च परिपालयेत् ॥

**Colophon.** इति विद्वद्भिरचिते विवादार्णवसेतुके ।
तरङ्गो निखिलदण्डाद्यैरेकविंशोऽत्र कीर्त्तितः ॥
वाणेश्वर-कृपाराम-रामगोपाल-कृष्णजीवनाख्यैः ।
वीरेश्वर-कृष्णचन्द्र-श्रीगौरीकान्ताभिधानैः ॥
सद्भिः कालीशङ्कर-श्यामसुन्दर-कृष्णकिशोरसंज्ञैः ।
सीतारामसंज्ञैश्च कृतो ग्रन्थः स्फुरतु सभायाम् ॥
इत्यनेकविषयवासि विद्वद्वृन्दोपवर्णितः ।
विवादार्णवसेत्वाख्यो ग्रन्थः संपूर्णतां गतः ॥

**विषयः ।** मन्वादिसंहिताभ्यः मिताक्षराकृत्-धर्म्मरत्नकृत्-शूलपाणि-वाचस्पतिप्रभृतिपूर्व्वतननिबन्धृवाक्येभ्यश्च प्रमाणमुद्धृत्य नानाविषयवासिभिः विद्वद्वृन्दैः वाणेश्वर-कृपारामप्रभृतिभिः निबद्धोऽयं ग्रन्थः । अत्र च स्मृतिशास्त्रगताः सर्व्व एव विषयाः सम्यग्विचारपूर्व्वकं निर्णीता इति ।

---

**No. 336.** विषयतावादार्थः वा विषयताविचारः. Substance, country-made paper; 17 × 4 inches. Folia, 13. Lines, 9 on a page. Extent, 599 çlokas. Character, Bengali. Date, ? Place of deposit, Dhānukā *viâ* Pālang, District Faridpur, Paṇḍita Kālikiŋkara Vidyābhūṣaṇa. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।
बुद्धिर्नाम कश्चिदात्मविशेषगुणस्तद्व्यवस्थितिर्घटमहं जानामीत्याकारका ...
... रसाधारणानुभवबलादेव सा च सविषयिका तत्तद्धर्म्मिग्राहकप्रतीत्य-घटादिविषयकत्वेनैव तदवगाहनात् । घटादिनिष्ठं तद्विषयत्वञ्च तत्प्रति-योगिकसम्बन्धविशेषः । स च प्रतियोगित्ववत् स्वरूपानतिरिक्तः स्वरूपेणैवोपपत्तौ अतिरिक्तकल्पनाया अनवकाशात् । इत्यादि ।

**End.** तत एव तादृशज्ञानस्य तद्विषयकत्वोपपत्तेः प्रकारतादीनां तथानुपगमे तादृशानुमित्यादीनां बाधाद्यप्रतिबन्धकत्वप्रसङ्गः । विरोधिज्ञानाप्रतिबध्यत्वप्रसङ्गश्च । प्रकारतादीनामेव तादृशप्रतिबध्यप्रतिबन्धकतावच्छेदकत्वादिति दिक् ॥

**Colophon.** इति विषयताविचारः ॥ श्रीहरिः शरणम् ॥ श्रीगुरवे नमः ॥

**विषयः ।** अनुमानादिभिर्विषयज्ञानस्य विचारः । प्रसङ्गाच्चाधाराधेयोद्देश्यविशेषणादीनां विचारः ॥

---

**No. 337.** विष्णुसहस्रनामविवरणम्. By विद्यारण्यतीर्थः. Substance, country-made paper, 12 × 8 inches. Folia, 58. Lines, 13 on a page. Extent, 754 çlokas. Character, Nāgara. Date, ? Place of deposit, Kāçidhāma, Khālispurā, Paṇḍita Priyanātha Tattvaratna. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो गुरुभ्यः ।
धर्म्मगाङ्गेयसंवादे महार्थव्यञ्जवर्ण्णनाम् ।
विष्णुनामसहस्रस्य परिचर्य्या विरच्यते ॥ इत्यादि ।

**End.** तर्पयेच्चार्जयेच्चैव ब्राह्मणान् भोजयेत्ततः ।
सुवर्णं दक्षिणां दद्यात् वित्तशाठ्यं विवर्ज्जयेत् ॥
एवमाराध्य लक्ष्मीशं सततं लक्ष्मीमान् भवेत् । इति ।
विष्णुनाम्नां सहस्रस्य परिचर्य्या कृता शुभा ।
सहस्रशाखिनः प्रीत्यै श्रीमतः काशीभूपतेः ॥
शं नो वातः पवतां शं न स्तपतु सूर्य्यः ।
शं नः ......वः पर्ज्जन्योऽभिवर्षतु ॥

**Colophon.** इति श्रीविद्यारण्यतीर्थकृत सहस्रनामविवरणपरिशिष्टं समाप्तम् । शुभम् ।

**विषयः ।** महाभारतान्तर्गतविष्णुसहस्रनामव्याख्या ।

---

**No. 338.** विष्णुसिद्धान्तग्रन्थः. Substance, country-made paper, 47 × 3 inches. Folia, 35. Lines, 6 on a page. Extent, 497 çlokas. Character, Bengali. Date, ? Place of deposit, Calcutta Çyāmapukura Viçvakoṣa office, Bābu Nagendranātha Vasu. Appearance, fresh. Verse. Generally correct.

**Beginning.** ॐ श्रीश्रीसूर्य्यादिभ्यो ग्रहेभ्यो नमः ।
जये वैकुण्ठसंस्थानश्रीमन्नारायण प्रभो ।
श्रीलक्ष्मीचेत् प्रियार्थं ज्योतिषां चरितं वद ॥

ये श्रीसूर्य्यादयः खेटा ज्योतिश्चक्रनिवासिनः ।
तेषां गुणानां गरिमा कः प्रवक्तुं समर्हति ॥
तथापि तव प्रीत्यार्थं श्रीलक्ष्मीनारायणः स्वयम् ।
प्रवदेयं मनाक् गुह्यं सावधानावकर्णय ॥
श्रीसूर्य्यः परमो ब्रह्मा श्रीसूर्य्यः परमः शिवः ।
श्रीसूर्य्यः परमो विष्णुस्तस्मै श्रीब्रह्मणे नमः ॥
खखाब्धवेदर्त्तुखखप्रचन्द्राब्धाब्धाम्बराग्नीषुशरेषुचन्द्रैः (१५५५२०००१३०८४०००) ।
मितेऽत्र वर्षे प्रगते विधातुः श्रीविष्णुनामावतरं भुवेऽस्तम् ॥ इत्यादि ।

**End.** ग्रहाणामर्च्चने होमे यज्ञे चौषधिधारणे ।
दाने जपे वा मन्त्रस्य शान्तये मन्त्रधारणे ॥
धारणे कवचस्यैवं ग्रहविप्रार्च्चनं चरेत् ।
धारणे ग्रहमूलस्य कवचस्यापि धारणे ॥
ग्रहविप्रान्यविप्राणां न कुर्य्यान्मुखदर्शनम् ।
अन्यथा विफलं तस्य बन्ध्यास्त्रीरमणं यथा ॥

**Colophon.** इति श्रीलक्ष्मीनारायणसंवादे विष्णुसिद्धान्तग्रन्थे, दैवसिन्ध्वन्यादिप्रतिक्रियादानाधिकारो द्वादशः ॥ अतःपरं खण्डितम् ।

**विषयः** । प्रथमाधिकारे,– ताराभुवादिनिरूपणम् । द्वितीयाधिकारे,– भौमादिपञ्चभुवादिनिरूपणम् । तृतीयाधिकारे,– मान्दिकरविराहुकेतूनां स्फुटाधिकारादिः । चतुर्थाधिकारे,– भौमादिपञ्चस्फुटादिनिरूपणम् । ५म–६ ष्ठाधिकारयोः,– शकस्वपतेस्तत्पत्यादिनिरूपणम् । तद्यथा,–

(नवागचन्द्राग्निगजाष्टबाणपक्षाङ्कचन्द्रप्रमिते गतेऽब्दे ।
स्वर्णांशकादित्यनृपोऽपि भावी तदब्दयुक्तो क्षितिरक्षिवर्षम् ॥
एषः सप्तमपत्रस्थः श्लोकः ।) ७ माधिकारे,– विप्रश्नादिनिरूपणम् । ८ माधिकारे,– चन्द्रग्रहणादिनिरूपणम् । ९ माधिकारे,– रविसङ्क्रमणादिः । १०म–११ शाधिकारयोः,– दुष्टग्रहजन्यदोषप्रतीकारकरणदानादिः । १२ शाधिकारे,– दैवसिन्ध्वन्यादिप्रतिक्रियानिरूपणम् ।

---

**No. 339. वीरभद्रतन्त्रम्.** Substance, country-made paper, 13×2 inches. Folia, 10. Lines, 6 on a page. Extent, 232 çlokas. Character, Bengali. Date, ? Place of deposit, Kā̃ṭhālpāḍā *vid* Naihāṭi, Paṇḍita Rāmatāraṇa Ṭhākura. Appearance, old. Verse. Incorrect.

**Beginning.** श्रीगुरुः ।

पार्व्वत्युवाच ।

एतत् व्याप्तं जगत्सर्व्वं नानाविधिसमाकुलम् ।

उपायं ब्रूहि लोकानां साधकानां सुखावहम् ॥

दुर्ज्जनानाञ्च पापानां दुर्ज्जयानां तथैव च ।

चशुभान् ब्रूहि मे योगान् नानाव्याधिकरान् प्रभो ॥

ईश्वर उवाच ।

शृणु त्वं हि वरारोहे यत्त्वज्ञार्थञ्च वाञ्छसि ।

तद्वदामि च ते देवि यत्सर्व्वं समुदाहृतम् ॥ इत्यादि ।

**End.** ॐ क्रीं कामीः क्रीं नमः चाकर्षणमन्त्रः । ॐ चण्डिकायै नमः । ह्रीं ह्रीं ह्रीं नमः । अस्य शतजपेन सर्व्वकामः सिद्धो भवति । ॐ कामिनी स्वाहा अनेन घृतमासहोमाद्वाक्सिद्धिर्भवति ॥ ० ॥

**Colophon.** इति वीरभद्रतन्त्रे चतुर्थः पटलः ॥ समाप्तोऽयं ग्रन्थः ।

**विषयः ।** भूताकर्षणम् । मोहनादिः । विद्वेषणादिः । उच्चाटनादिः । स्तम्भनवशी-करणादिश्चेति ।

---

**No. 340.** वृन्दावनकाव्यम्. By मानाङ्कराजः. Substance, palm-leaf, 13 × 1½ inches. Folia, 10. Lines, 2 on a page. Extent, 58 çlokas. Character, Bengali. Date, Sk. 1662. Place of deposit, District Vãkuḍā, Viṣṇupura, Paṇḍita Cãndranārāyaṇa Bhaṭṭācāryya. Appearance, old. Verse. Correct.

**Beginning.** श्रीश्रीहरये नमः ॥

वरदाय नमो हरये

पतति जनोऽयं स्मरन्नपि न मोहरये ।

बद्धरसकन्द हता

मनसि दितिर्येन दैत्यचक्रं हता ॥

लमिव भुजङ्गवि शेषं

व्युपधाय स्वपिति भुजङ्गविशेषम् ।

नवपल्लवसमकरया

श्रियोर्म्मिपङ्क्त्या च समकरया ॥ इत्यादि ।

**End.** इत्याद पीतवाससमायननेत्रस्तं
कंसासुरात् पद्मनतामायतने चस्तं ।
चरितानां विमस्ततया सच,लीलाजानां
च्छायां विकिरन्निव दशनैः सह लीलाजानाम् ॥ * ॥

**Colophon.** इति मालाङ्केन विरचितं इन्दावनाख्यं काव्यं समाप्तम् ॥ ० ॥
श्रीश्रीजाने दयाधाने चरणाञ्जतले तव ।
श्रीकाशीरामभक्तिचा लिपिरेषा समर्पिता ॥ ० ॥ शकाब्दाः १६६२ ।

**विषयः ।** कृष्णस्तुतिविषयकं काव्यमिदम् । अत्र च यमकादि नानाविधवाक्यभङ्गी विन्यस्ता ।

---

**No. 341. वृन्दावनकाव्यटीका.** Substance, palm-leaf, 14×2 inches. Folia, 20. Lines, 5 on a page. Extent, 375 çlokas. Character, Bengali. Date, Sk. 1662. Place of deposit, District Vākuḍā Viṣṇupura, Kādākuli, Paṇḍita Candranārāyaṇa Bhaṭṭācāryya. Appearance, old. Prose. Generally correct.

**Beginning.** श्रीश्रीहरये नमः । मालाङ्काभिधानो महीपालः सकलगुणतल्लजो यमकिते-नाऽर्य्याहतिनाम्ना जातिप्रभेदेन भगवतोर्वासुदेवैयोः स्तुतिं कृतवान् । तत्र विघ्नविनाशाय विष्णोरनुस्मरणमाह वरदायेत्यादि । अस्यार्थः । आस्तां पूजा-नमस्कारादि यं हरिं स्मरन्नपि मनसि कुर्व्वाणोऽपि लोकः । मुह्यत्यस्मिन्निति मोहोऽविद्या अस्य रये प्रवाहे न निमज्जतीत्यर्थः । येन हरिणा वासुदेवेन दैत्यचक्रं दहता भस्मसात् कुर्व्वता दितिर्दैत्यमाता मनसि हृदये चता ताड़िता सती बहुशो विस्तरवारान् चक्रन्द क्रन्दितवती । तस्मै हरये नमः इति सम्बन्धः ॥ इत्यादि ।

**End.** तं पीतवाससं विष्णुमित्याह । कीदृशं आयतनेत्रः आयते दीर्घे नेत्रे यस्य सः । कीदृशं तं पद्मनतां गोपानां आयतने गृहे कंसासुरात्त्रस्तं । अवस्त-मिति वा । किं कुर्वन्निवाह । तत्राह । दशनैर्दन्तैः सह हसितानां । विमल-दन्ता अपि विमला इति भावः । कीदृशानां लाजानां लीलाजानां लीलया जनितानां गोपस्त्रीभिर्लीलया दत्तानामिति यावत् ॥ * ॥

**Colophon.** इति राजाधिराजमालाङ्कविरचित-वृन्दावनाख्यकाव्य-टीका समाप्ता ॥
श्रीश्रीजाने दयाधाने चरणाञ्जतले तव ।
श्रीकाशीरामभक्तिचा लिपिरेषा समर्पिता ॥ शकाब्दाः १६६२ ।

विषयः। मालाकरराजविरचितस्य इन्दावनाख्यकाव्यस्य व्याख्यानम्।

---

**No. 342.** वैद्यवल्लभः. By श्रीकान्तदासः. Substance, country-made paper, $19\frac{1}{2} \times 4\frac{1}{2}$ inches. Folia, 30. Lines, 7 on a page. Extent, 604 çlokas, Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Sonārgā̃, Bābu Prabhātacandra Sena. Appearance, tolerable. Verse. Incorrect.

**Beginning.** नमः कात्यायन्यै।

...... श्रमसुखशायिकां गतायाः
सत्यायाः स्तनकटकक्षतानि पश्यन्।
... ... ... ... ... ... ... ... ... ...
... ... प्रहृयतु केशवः शिवं वः॥
मुद्रामक्ष्णां त्रिभुवनगुरोरीक्षमाण...
... ... ... ... ... ... ... ... ... ।
भावाक्रीतैः सपदि विकला वेपथु संवहन्ती
रन्तुं गन्तुं न च वलवती पातु वः श्रीभवानी॥
श्रीमत्श्रीकान्तदासेन राजवैद्येन धीमता।
आलोक्य सर्व्वतन्त्रेभ्यः क्रियते वैद्यवल्लभः॥
ये बाल्यभावादनधीततन्त्रा
दारिद्र्यदुःखानलदग्धचित्ताः।
अनन्यजीवाः प्रतिकर्म्मशक्ता-
स्तेषां प्रबोधार्थमयं निबन्धः॥
अन्येषु शास्त्रेषु विवादमात्रं
न लभ्यते तत्र फलं समक्षम्।
पदे पदे ज्योतिषि मन्त्रवादे
चिकित्सिते प्रत्ययमावहन्ति॥
पूर्व्वं-खण्डमाह।
आयुर्वेदागमं पूर्व्वमायुर्वेदं ततः परम्।
साङ्गोपायं ततः शिष्यं गुणश्चापि यथोदितम्॥
... ... ... ... ... ... ... ... ... ... ।

आयुर्वेदागममाह ।

ब्रह्मणा हि यथा प्रोक्तमायुर्वेदं प्रजापतिः ।

जग्राह निखिलेनादावश्विनौ च ततः परम् ॥ इत्यादि ॥

**End.** अथ मूत्रलक्षणमाह ।

पाश्चात्ये रजनीयामे घटिकानां चतुष्टये ।

उत्थाय रोगिणं वैद्यो मूत्रोत्सर्गञ्च कारयेत् ॥

आद्यन्तधारां सन्त्यज्य मध्यधारां समुद्धरेत् ।

शुभे कांस्यादिके पात्रे कृत्वा मूत्रं परीक्षयेत् ॥

वातेषु पाण्डुरं मूत्रं सफेनं कफरोगिणाम् ।

रक्तवर्णं भवेत् पित्ते द्वन्द्वजे मिश्रितं भवेत् ॥

... ... ... ... ... ...... ... ... ... ।

पाण्डुरं शीतलं मूत्रं भूरि श्लेष्मज्वरे भवेत् ।

कृष्णं चाविलकं मूत्रं सन्निपातज्वरे भवेत् ॥

यस्येक्षुरससङ्काशं मूत्रं नेत्रे च पिञ्जरे ।

रसाधिक्यं विजानीयान्निर्दिशेत्तस्य लङ्घनम् ॥

**Colophon.** समाप्तिसूचकं वाक्यं नास्ति ॥

विषयः । आयुर्व्वेदस्य लक्षणकथनमुखेनायुर्व्वेदागमस्यास्योत्पत्तिविवरणम् । वेदाङ्गलक्षणम् । शिष्यलक्षणम् । परिषल्लक्षणम् । वैद्यलक्षणम् । चिकित्सालक्षणम् । असद्वैद्यलक्षणम् । सद्वैद्यप्रशंसा । द्रव्याणां गुणदोषनिरूपणम् । रोगिणां गुणदोषयोर्द्विविधचिकित्सा । आतुरलक्षणम् । त्रिविधौषधनिरूपणम् । सप्ताशय-सप्तधातु-सप्तोपधातु-सप्तत्वगादीनां परस्परलक्षणम् । शारीरदोषाणां लक्षणम् । तेषां स्थाननिरूपणञ्च । प्राकृतविकृतसंज्ञकानां दोषाणां कर्म्मनिरूपणम् । स्त्रीपुंसभेदेन शरीरस्थरन्ध्रनिरूपणम् । धातूनां कर्म्मनिरूपणम । धातूनां वृद्धिक्षयजनितरोगनिरूपणम् । तेषां चिकित्सानिरूपणञ्च । पञ्चेन्द्रियनिरूपणम् । तेषां प्रत्येकस्य गुणनिरूपणञ्च । पुरुषलक्षणम् । शुक्रभेदेन स्त्रीपुंनपुंसकजन्मनिरूपणम् । तेषां सात्त्विकादिभेदेन गुणदोषभेदकथनञ्च । वातपित्तादि सप्तधा प्रकृतिलक्षणम् । अतिह्रस्वादिनिन्दिताष्टपुरुषनिरूपणम् । अतिह्रस्वादिपुरुषगतरोगविशेषनिरूपणम् । तद्रोगप्रशमनोपायकथनञ्च । ऋतुभेदे वातादिदोषाणां प्रकोपकथनम् । तेषां हेतुकथनञ्च । कुपितलिङ्गनिरूपणम् । तेषां कर्म्मनिरूपणञ्च । विगुणवातादिनिरूपणम् । प्रज्ञापराधस्य लक्षणम् । तस्य व्याधिकारणत्वं तच्चिकित्सा च । पञ्चिधाहारनिरूपणम् । लघुगुरुद्रव्याणां मात्रानिरूपणम् । दुष्टाहारनिरूपणम् । ऋतुभेदे आहारीयद्रव्यभेदनिरूपणम् । षड्रसनिरूपणम् । आयुःपरीक्षणम् । शिरासकललक्षणम् । मूत्रलक्षणञ्चेति ।

कल्पजपनियमः । ब्राह्मणभोजनस्यावश्यकत्वकथनम् । मन्त्रसिद्धिलक्षणकथनम् । सिद्धिस्थानञ्च । अथ कूर्म्मचक्रम् । अथ भक्ष्याभक्ष्यविवेचनम् । अथ जपमालानिर्णयः । मालाप्रतिष्ठाप्रकरणम् । पुरश्चरणे वर्ज्जनीयनिरूपणम् । जपकाले निषिद्धकर्म्मकथनम् । शक्तिनियमः । कौलिकार्च्चनफलकथनञ्च । अथ वीरकल्पः । तत्र शक्तिस्तोत्रम् । कुमारीपूजानियमः । अथ तर्पणविधिः । अथ अन्यप्रकारेण पुरश्चरणविधिः । ग्रहणपुरश्चरणम् । नवरात्रिपुरश्चरणम् । पुरश्चरणमन्तरेणापि मन्त्रसिद्धिः । अथ काम्यप्रयोगः । लतासाधनप्रकारः । अथ महिषमर्द्दिनीमन्त्रादिः । अस्याः पूजनक्रमः । अस्याः पुरश्चरणजपादिः । तत्र होमद्रव्यनियमः । महिषमर्द्दिनीस्तोत्रम् । अस्याः कवचञ्च । अथ नीलक्रमः । तत्र शवक्रमः । स्नाननियमः । अथ जयदुर्गामन्त्रः । तत्र श्मशाने विशेषकथनम् । अथ शवसाधनविधिः । अथ प्रकारान्तरेण वीरसाधनविधिः ॥ अथ आकर्षणप्रयोगः । निग्रहाद्युपायः । अथ उच्चाटनविधिः । अथ बालसंस्कारविधिः । अथ शक्तिशुद्धिकथनम् । तत्र नवकन्याविधिः । स्वयम्भूकुसुमोत्पत्तिकथनम् । अथ कुण्डगोलविधिः । अथ दूतीयागविधिः । अथ सामान्यतः साधनविधिः । तत्र कुलवारादिनियमः । अथ शिवावलिविधिः । अथ समयाचारः । भाववयविवेचनम् । कुलीनाचारकथनम् । अथ कौलिकानां प्रायश्चित्तविधिः । अथ पशुसंसर्गप्रायश्चित्तम् । मन्त्रमालागमनप्रायश्चित्तम् । अनिवेदितद्रव्यभोजनप्रायश्चित्तम् । प्राणिहिंसाप्रायश्चित्तम् । कुलीनार्च्चनविधिः । होमादिनियमश्च । इति ।

---

**No. 373.** श्राद्धक्रियाकौमुदी. By गोविन्दकविकङ्कणाचार्य्यः. Substance, country-made paper, 16 × 2½ inches. Folia, 62. Lines, 6 on a page. Extent, 1,175 çlokas. Character, Bengali. Date, ? Place of deposit, Brāmhaṇamaṇḍali, *viâ* Bārāsat, Paṇḍita Rāmanārāyaṇa Bhaṭṭācāryya. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

आलोच्याखिलसंग्रहानविकलं दृष्ट्वा पुराणान्यपि
प्रोक्ताः सम्यगतो विविच्य मुनिभिर्मन्वादिभिः संहिताः ।
श्रीमत्तातपदारविन्दविलसद्धूलीभवोद्देशतः
श्रीगोविन्दकविः करोति गहनां श्राद्धक्रियाकौमुदीम् ॥
अथ वाजसनेयिनां श्राद्धक्रमसंक्षेपः ।
निमन्त्रणं स्वागतञ्च पाद्यमर्घ्यादिकं द्विजे ।
द्विजोपवेशनं दीपो विष्णोरर्च्चा चरिस्मृतिः ॥
तिलदर्भपविक्षेपो द्वारमध्ये च सर्व्वतः ॥ इत्यादि ।

**End.** ततो वैगुण्यसमाधानार्थं संकल्पपूर्व्वं ॐ तद्विष्णोरित्यनेन श्रीविष्णुः पुण्डरीकाक्षः श्रीहरिरित्यनेन च विष्णुं स्मृत्वा पात्रसमर्पणं पिण्डार्पणञ्च कृत्वा वामदेव्यार्थं त्रिः पठित्वा पिण्डानि गोऽजविप्रेभ्यो दत्त्वा अग्नौ जले वा क्षिप्त्वा वस्त्राभ्यां रक्षार्थं दीपमाच्छाद्य पाणिपादौ च प्रक्षाल्य स्वयं ब्राह्मणांश्च प्रणम्य प्रकृतं कर्म्म कृत्वा ब्राह्मणान् भोजयित्वा स्वयं भुञ्जीत । सति शेषे श्राद्धशेषमवश्यं भुञ्जीत । उपवासदिने जिघ्रेत् । गर्भाधानेतरकर्म्मणाभ्युदयिकश्राद्धवासरे मैथुनं त्यजेत् । अथ यदर्थं वृद्धिश्राद्धं कृतं दैवात् तद्दिने यदि तत् कर्म्म न स्यात् तदा पुनस्तत्कर्म्मकाले वृद्धिश्राद्धं कर्त्तव्यम् । यदि संस्कार्य्योऽधिकारी तदा संस्कार्य्यपितृभ्यो दद्यात् द्वितीयादिविवाहे वरः स्वपितृभ्यो दद्यात् । अवीरायाः कन्याया विवाहे श्राद्धं नास्ति । इति वृद्धिश्राद्धप्रयोगः ॥*॥

**Colophon.** इति श्रीगोविन्दकविकङ्कणाचार्य्यविरचिता श्राद्धक्रियाप्रयोगकौमुदी समाप्ता ॥ ० ॥

**विषयः।** सपिण्डीकरणश्राद्धादिप्रयोगः । वृषोत्सर्गव्यवस्था । वृषोत्सर्गस्थानादिनिरूपणम् । प्रेतक्रियाक्रमः । पर्य्यन्तरद्दारादिः । सहमरणप्रयोगादिः । गङ्गायामस्थिक्षेपप्रयोगादिः । पूरकपिण्डप्रयोगः । अशौचविशेषे पिण्डदानव्यवस्थादिः । प्रेतक्रियाधिकारिव्यवस्था । अशौचान्तद्वितीयदिनकृत्यम् । वैतरणीगोदाननिरूपणम् । षोडशदाननिरूपणम् । द्विजदम्पतीपूजननिरूपणम् । षोडशपिण्डदानादिप्रयोगः । आभ्युदयिकश्राद्धप्रयोगश्चेति ॥

---

**No. 374.** श्राद्धदीपिका. By महामहोपाध्यायश्रीभीमः. Substance, country-made paper, 14 × 2 inches. Folia, 94. Lines, 5 on a page. Extent, 1,700 çlokas. Character, Bengali. Date, ? Place of deposit, District Vãkuḍā Viṣṇupura, Paṇḍita Rūparāma Bhaṭṭācāryya. Appearance, very old. Prose. Generally correct.

**Beginning.** ॐ गुरूनुपास्य मन्वादीन् धर्म्मशास्त्राण्यनेकशः ।
पुराणन्यायमीमांसाकामधेन्वादिसंग्रहान् ॥
समवीत्य क्रमेणैषा रचिता सामवेदिनाम् ।
सश्राद्ध ... ... क्रियानुष्ठानपद्धतिः ॥
... ... ... ... ... ... वीतमत्सरैः ।
सम्यग्ज्ञोक्तविधानार्थमनयैव द्विजातिभिः ॥
अथ कुसुमशालिनां गोभिलोक्तसन्ध्यास्नानादिविधिर्लिख्यते । रात्रिशेष ...

रात्रिवासस्थला वासान्तरं परित्याय त्रिरात्रं शौचार्थं जलं खनिकाद्य गृहीत्वा खट्टाकरत्रपमार्थं भूदेशं त्यक्त्वा दक्षिणपश्चिमकोणे व्रजेत्। इत्यादि।

End. अग्रेतनमत्रयं स्थापयेत्। ततः कुशण्डिकां समाप्य सर्व्वं होमकर्म्म यथोक्तप्रकारेण समापयेत्। तत उदीच्य-वामदेव्यगानान्तं सर्व्वं कर्म्म समाप्य इषवत्स-तरीणामलङ्कारं वाससी गावाचार्य्याय दद्यात्। तथाचोक्तं छन्दोगपरिशिष्टार्थमयमविद्याः। श्रुतिरपि। श्रुतिस्मृतिसमापन्नं तमाचार्य्यं प्रचक्षते। गां यथा दद्यात् तदुच्यते। आचार्य्यं दक्षिणामुखं गन्धमाल्यादिना पूजयित्वा धेनुमालङ्कृत्य पूजयित्वा प्रणम्य कृताञ्जलिः पठेत्। ॐ या लक्ष्मीः सर्व्वभूतानामित्यादि। पुच्छप्रदेशे स्थित्वा वाक्यावलीं दत्त्वा उत्सृज्य दद्यात्। अपरं ग्रन्थविस्तरभयेन दूरीकृतमिति ॥ ० ॥

Colophon. इति महामहोपाध्याय-कान्विविल्लीय-श्रीश्रीभीमविरचिता श्राद्धदीपिका समाप्ता ॥ ० ॥ हरये नमः ॥ समाप्तश्चायं ग्रन्थः ॥

विषयः। शौचसन्ध्यादिविधिः। स्नानविध्यादिः। नित्यश्राद्धादिः। प्रेतैकोद्दिष्टश्राद्धादिः। भूमिशय्यादिदानविधिः। साम्वत्सरिकश्राद्धादिः। वृद्धिश्राद्धादिः। अस्थिसञ्चयनश्राद्धादिः। द्वादशकृत्यनिरूपणम्। वृषोत्सर्गविध्यादिश्च।

---

No. 375. श्राद्धप्रदीपः. By प्रद्युम्नशर्म्मा. Substance, country-made paper, 14×2 inches. Folia, 65. Lines, 5 on a page, Extent, 1,100 çlokas. Character, Bengali. Date, Sk. 1448. Place of deposit, District Vāṅkuḍā Viṣṇupura, Paṇḍita Rūparāma Bhaṭṭācāryya. Appearance, very old. Prose. Generally correct.

Beginning. ॐ नमो गणेशाय।

सन्त्यादिशास्त्रं बहु वीक्ष्य यत्नतः
प्रणम्य गोपीजनवल्लभं पुरः।
श्राद्धप्रदीपं प्रथुकप्रबोधकं
प्रद्युम्नशर्म्मा वितनोति चाकुलम् ॥
पुराणविधिविचितोऽस्ति ...... 
श्राद्धप्रकाशः प्रचुरः प्रयत्नतः।
ग्रन्थः सतां बोधकरस्तथापि बो-
ऽस्मार्कं प्रबोधाय ममायमुद्यमः ॥

अथानितकथिते श्राद्धशब्दार्थे श्राद्धाङ्गानां निरूपयितुमशक्यत्वात् प्रथमतः

श्राद्धशब्द एव निरूप्यते । अथच किमिदं श्राद्धं नामेति । अत्र कश्चित् जनपतिः पितॄनुद्दिश्य द्रव्यत्यागो ब्राह्मणस्वीकारपर्य्यन्तः श्राद्धमिति । तन्न देव-श्राद्धादौ तु श्राद्धलक्षणाव्याप्तेः । देवश्राद्धमपि पितृश्राद्धान्तर्गतमिति चेन्न दैविकं दशमं स्मृतमिति 'विश्वामित्रवचनेन. देवस्यापि पृथक् श्राद्धत्वात् । इत्यादि ॥

**End.** ॐ अद्येत्यादि यथासम्भववेदगोत्रशाखानाम्ने ब्राह्मणाय तुभ्यं अमुकगोत्रस्य पितुरमुकदेवशर्म्मणः अमुकगोत्रस्य पितामहस्य अमुकदेवशर्म्मणः अमुक-गोत्रस्य प्रपितामहस्यामुकदेवशर्म्मणः कृतैतत् नित्यश्राद्धीयान्नदत्तोत्सर्गप्रतिष्ठार्थं एतद्रजतं मूल्यम्बाहं ददामि एवं मातामहादीनां दक्षिणोत्सृज्य देया ॥ ॐ अद्येत्यादि यथासम्भववेदगोत्रशाखानाम्ने ब्राह्मणाय तुभ्यं सनकसनन्द-सना-तन-कपिलश्राद्धविरोचनपञ्चशिखानामतिथिमनुष्याणां कृतैतन्नित्यश्राद्धीयान्न-दत्तोत्सर्गप्रतिष्ठार्थं दक्षिणामेतत् काञ्चनमेतन्मूल्यम्बाहं ददामि । तत ॐ नित्यश्राद्ध अन्नदत्तोत्सर्गकर्म्मेदमच्छिद्रमस्त्विति सर्व्वत्र वदेत् ततः पित्रादिभ्यो नमः ॐ सनकादिभ्यो नमः । हारीतः ॥

इमं श्राद्धविधिं पुण्यं कुर्य्याद्वापि पठेत्तु यः ।
स सर्व्वकामसंयुक्तो ह्यमृतत्वञ्च विन्दति ॥

बृहस्पतिः । य एवं वेत्ति मतिमान् तस्य श्राद्धफलं भवेत् ।
उपदेष्टानुमन्तारौ लोके तुल्यफलौ स्मृताविति ॥

**Colophon.** इति श्रीवह्रदेशीय-हाकादिहौ-शासनस्थ-सत्पण्डित-श्रीधरशर्म्मतनय-श्रीमत् प्रद्युम्नशर्म्मविरचितः श्राद्धप्रदीपः समाप्तः ॥ * ॥ श्रीश्रीशुभमस्तु ।
शकाब्दाः १४४८ तारीख १२ वैशाखस्य ॥ ० ॥ श्री० ॥

**विषय: ।** श्राद्धशब्दार्थनिरूपणम् । मातुः पृथग्दानादिविधिः । श्राद्धकरणफलादिः । श्राद्धभेदनिरूपणम् । श्राद्धपात्रादिविवेचनम् । अमावस्याश्राद्धकालादिः । मघात्रयोदशीश्राद्धादिः । सपिण्डीकरणादिविधिः । षोडशश्राद्धलक्षणादिः । अशौचपतितश्राद्धादिः । वृद्धिश्राद्धनित्य-श्राद्धादिश्च ।

---

**No. 376. श्राद्धविवेकव्याख्या . By श्रीनाथशर्म्मा .** Substance, country-made paper, 17 × 3 inches. Folia, 101. Lines, 5 on a page. Extent, 1,800 çlokas Character, Bengali. Date, ? Place of deposit, Vidyākūṭa Tripurā Paṇḍita Çyāmacandra Vidyālaṇkāra. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमः शिवाय ।

व्यवस्थाद्वैधसम्भाव्निसम्भानच्छेदहेतवे ।

विबुधश्रेणिवन्द्याय नमः श्रीशूलपाणये ॥

श्रीकराचार्य्यपुत्रेण श्रीमच्छ्रीनाथशर्म्मणा ।

व्याख्या श्राद्धविवेकस्य जनकोज्ञा निबध्यते ॥

क्व शूलपाणेर्वचनं दुरूहं क्वधीर्मदीयाल्पतमा तथापि ।

ब्रवीमि तात्पर्य्यलवं तदीयं यदत्र तन्मे सुधियः क्षमध्वम् ॥

इह खलु सुखं दुःखाभावश्चेत्यादि ।

**End.** इत्थमेव व्यवहारसमावेशोऽपीति प्रतीमः ।

**विषयः।** शूलपाणिमहामहोपाध्यायकृतस्य श्राद्धविवेकाख्यस्मृतिशास्त्रीयग्रन्थस्य व्याख्या ।

---

**No. 377.** श्रीकृष्णामृतम् . By रूपगोस्वामी . Substance, country-made paper, 12 × 5 inches. Folia, 45. Lines, 8 on a page. Extent, 1,000 çlokas. Character, Bengali. Date, Sk. 1658 Mallābda 1024. Place of deposit, District Vā̆kuḍā, Viṣṇupura, Paṇḍita Raghurāma Tarkaratna. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ नमः कृष्णचैतन्याय ॥

नमस्तस्मै भगवते कृष्णायाकुण्ठमेधसे ।

यो धत्ते सर्व्वभूतानामभवाय शतीः कलाः ॥

कृष्णवर्णं त्विषा कृष्णं साङ्गोपाङ्गास्त्रपार्षदम् ।

यज्ञैः संकीर्त्तनप्रायैर्यजन्ति हि सुमेधसः ॥

मुखारविन्दनिःस्यन्दमरन्दभरतुन्दिला ।

ममानन्दं मुकुन्दस्य संदुग्धां वेणुकाकली ॥

श्रीचैतन्यमुखोद्गीर्णा हरेकृष्णेति वर्णकाः ।

मज्जयन्तो जगत् प्रेम्नि विजयन्तां तदाह्वयाः ॥

श्रीमत्प्रभुपदाम्भोजैः श्रीमद्भागवतामृतम् ।

यद्व्याख्यानि तदेवेदं संक्षेपेण निषेव्यते ॥

इदं श्रीकृष्णतत्त्वसम्बन्धाद्यमृतामुधाः ।

आदौ कृष्णामृतं तत्र तत्त्वज्ञाः परिचिन्वते ॥

निर्णेतुं परिविख्यातं मयात्र परिस्फुटम् ।

प्रधानत्वात् प्रमाणेषु शब्द एव प्रमाण्यते ॥

यतस्तैः शास्त्रयोनित्वादिति न्यायप्रदर्शनात् ।
शब्दस्यैव प्रमाणत्वं स्वीकृतं परमर्षिभिः ॥
किञ्च तर्काप्रतिष्ठानादिति न्यायविधानतः ।
अमीभिरेव मुख्यत्वं तर्कस्यानादरः कृतः ॥
अथोपास्येषु मुख्यत्वं वस्तुमुत्कर्षभूमतः ।
कृष्णस्य तत्स्वरूपाणि निरूप्यन्ते क्रमादिह ॥
स्वयं रूपस्तदेकात्मरूप आवेशनामकः ।
इत्यसौ त्रिविधं भाति प्रपञ्चातीतधामसु ॥ इत्यादि ।

End. एकविंशे तथा पञ्चविंशे चाध्याय ईरिता ।
माधुरी ब्रजदेवीभिर्वर्णोरेका मयाङ्कता ॥
श्रीविष्णवस्य ।
असमानोर्द्धमाधुर्य्यतरङ्गामृतवारिधिः ।
अस्थिरस्थावरोल्लासिरूपो गोपेन्द्रनन्दनः ॥
तथा तन्त्रे ।
कन्दर्पकोट्यर्ब्बुदरूपशोभा-
नीराज्यपादाब्जनखाञ्चलस्य ।
कुत्रापदृष्टश्रुतरम्यकान्ते
र्ध्यानं परं नन्दसुतस्य वक्ष्ये ॥
श्रीदशमे ।
का स्त्र्यङ्ग ! ते कलपदामृतवेणुगीत-
सम्मोहितार्य्यचरितान्न चलेत् त्रिलोक्याम् ।
त्रैलोक्यसौभगमिदञ्च निरीक्ष्य रूपं
यद्गो द्विजद्रुममृगाः पुलकान्यबिभ्रन् ॥ ० ॥

Colophon. इति संक्षेपभागवतामृते श्रीकृष्णामृतं पूर्व्वखण्डम् ॥ ०
गौराङ्गपादसरसीरुहमत्तभृङ्गः
श्रीरामपूर्व्वशरणोऽखिलदेशदास्य ।
कृष्णामृतं निखिलवैष्णवतन्त्रसारं
शाकेऽङ्कवाणरसगोपकलामिते(ऽ)ब्दे ॥
पञ्च-वेद-ख चन्द्रेषु मिते सक्ष्मताब्दके ।
पीतं कृष्णामृतं वर्षविन्यासच स येन वै ॥ ० ॥

वन्दे रूपसचिन्त्याद्भुतचरितमखिलप्रकाशकं शाश्वम् ।
यन्मुखसुधारसमखिलं विश्वं ह्यास्वाद्यतं पिबति ॥ * ॥
श्रीश्रीराधाकृष्णः ॥

विषयः । कृष्णस्वरूपादिनिरूपणम् । भेदत्रयादिनिरूपणम् । नानापुराणादिवचनप्रमाणेन श्रीलावतारादिनिरूपणम् । पुराणादिवचनप्रमाणेन युगावतारादिनिरूपणम् । स्वरूपालक्षणादिनिरूपणञ्चेति ।

---

No. 378. श्रीराधासुधानिधिः. By हितहरिवंशगोस्वामी. Substance, country-made paper, 13 x 6 inches. Folia, 14. Lines, 11 on a page. Extent, 357 çlokas. Character, Bengali. Date, Sk. 1740. Place of deposit, District Vākuḍā, Kucekol, Bābu Yogīndranātha Siṁha Deva. Appearance, fresh. Verse. Generally correct.

**Beginning.** ॐ स्वस्ति । श्रीगणेशाय नमः । श्रीराधावल्लभो जयति । अथ श्रीमद्राधासुधानिधिस्तवो लिख्यते । वसन्ततिलकच्छन्दः ।
यस्याः कदापि वसनाञ्चलखेलनोत्थ-
धन्यातिधन्यपवनेन कृतार्थमानी ।
योगी + दुर्गमगतिर्मधुसूदनोऽपि
तस्या नमोऽस्तु वृषभानुभुवो दिशेऽपि ॥
ब्रह्मेश्वरादिसुदुरूहपदारविन्दं
श्रीमत्पराग-परमाद्भुतवैभवायाः ।
सर्व्वार्थसाररसवर्षिकृपार्द्रदृष्टे-
स्तस्या नमोऽस्तु वृषभानुभुवो महिम्ने ॥

**End.** श्रीराधे श्रुतिभिर्बुधैर्भगवतायामाय सद्वैभवे
स्तोत्रं स्वकृपा + तव रसजा योग्योऽप्यनङ्गारिनः ।
पद्येनैव सदा पराधिनिमन्त्र स्वर्गे विवक्त प्राक्-
काले चेव्रजसाङ्गुलार्च्चि किमपि प्रीतिं प्रसादीकुरु ॥ (?)
अद्भुतानन्दलोभश्च नाम्ना रससुधानिधिः ।
स्तवोऽयं कर्णकलशैर्गृहीत्वा पीयतां बुधाः ॥

**Colophon.** इति श्रीवृन्दावनेश्वरीचरणकृपामात्रविजृम्भित-श्रीराधासुधानिधिः स्तवः समाप्तः ॥ श्रीहितहरिवंशगोस्वामिना विरचितः ॥ शुभमस्तु शकाब्दाः १७४० ।

**विषयः ।** श्रीराधादेव्याः स्तुतिः ।

---

**No. 379.** षट्कर्म्मलक्षणटीका. By श्रीराघवेन्द्रशर्म्मा. Substance, country-made paper, 18 × 4 inches. Folia, 8. Lines, 9 on a page. Extent, 250 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamansiṁha Kaṭihāli, Paṇḍita. Ānanda Kiçora Nyāyālaŋkāra. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय । अथ फेत्कारिणीतन्त्र-तन्त्रसारादिलिखित-षट्कर्म्म-लक्षणानां श्रीवेदान्तवागीशमते टीका श्रीराघवेन्द्रशर्म्मणा विरच्यते ।
कारस्कराचासनक उडुम्बरोऽथ संज्ञकः ।
खदिरकुहरं शीघपिप्पली नागरोचितौ ॥ (?) इत्यादि ।

**End.** खण्डितत्वात् शेषो नास्ति ।

**विषयः ।** तान्त्रिकस्य षट्कर्म्मलक्षणाख्यग्रन्थस्य टीका ।

---

**No. 380.** षट्कारकबोधः. Substance, country-made paper, 13 × 3 inches. Folia, 20. Lines, 5 on a page. Extent, 340 çlokas. Character, Bengali. Date, Sk. 1726. Place of deposit, Vidyākūṭa Tripurā, Paṇḍita Çarat Candra Vidyālaŋkāra. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।
भग्नं मारबलं येन निर्जितं भवपञ्जरम् ।
निर्व्वाणपदमारूढं तं बुद्धं प्रणमाम्यहम् ॥
षट्कारकाणि सम्बन्ध उक्तानुक्ततया द्विधा । इत्यादि ।

**End.** उक्तानुक्तं प्रतिपाद्यं विभक्तिश्च दर्शयित्वा निर्णयः ।

**Colophon.** इति षट्कारकबोधः समाप्तः । शुभमस्तु । शकाब्दाः १७२६ । सन् १२१४ ।
श्रीरस्तु मयि लेखके नित्यम् ।

**विषयः ।** कातन्त्रीय षट्प्रकारकारकविषयविवरणम् ।

---

**No. 381.** षट्चक्रक्रमटीका. By नन्दरामतर्कवागीशः. Substance, country-made paper, $14\frac{1}{2} \times 3\frac{1}{4}$ inches. Folia, 16. Lines, 6 on a page. Extent, 318 çlokas. Character, Bengali. Date, ? Place of deposit, Kālikaccha, District Tripurā, Paṇḍita Rājacandra Sārvvabhauma. Appearance, old. Prose. Generally correct.

Beginning. प्रत्यूहव्यूहविध्वंसविस्फुरद्गण्डमण्डलम् ।
गजेन्द्रवदनं नौमि शुण्डाताण्डवपण्डितम् ॥
हरिर्विरूभयो यस्य रहस्यज्ञानहेतवे ।
श्रीनन्दरामः कुरुते षट्चक्रक्रमदीपनीम् ॥
अथ मङ्गलार्थकः मन्त्रानुसारेण परमानन्दनिर्व्वाहप्रथमाङ्कुरः । परमानन्द-
पदेन प्रथमोपाय उच्यते । इत्यादि ।

End. तस्य योगिनश्चेतोऽत्यन्तमभीष्टदेवतपदे इष्टदेवतापदे नरीनृत्यते पुनः पुन-
र्नृत्यति ॥ ५६ ॥

Colophon. इति श्रीनन्दरामतर्कवागीशभट्टाचार्य्यविरचिता षट्चक्रक्रमटीका सम्पूर्णा ।

विषयः । षट्चक्रक्रमनामकस्य तान्त्रिकयोगशास्त्रस्य व्याख्यानम् ।

---

No. 382. षट्चक्रटीका. By शङ्करः. Substance, country-made paper, 12 × 5 inches. Folia, 15. Lines, 5 on a page. Extent, 225 çlokas. Character, Bengali. Date, ? Place of deposit, Naihāṭi District 24-Parganās, Paṇḍita Haraprasāda Çāstrī. Appearance, tolerable. Prose. Generally correct.

Beginning. प्रणम्य शैलाधिपकन्यकायाः
पदाब्जमज्ञानतमिस्रतुल्यम् ।
प्रतन्यते श्रीयुतशङ्करेण
षट्चक्रटीकाख्य-सुपुस्तिकेयम् ॥ इत्यादि ।

End. ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
तत्परे च शिवो देवः षट् शिवाः परिकीर्त्तिताः ॥
आज्ञिकं (?) मयङ्कैरे शीघ्रगतिर्याति श्रीशभर्त्तं चयात् ॥

Colophon. इति षट्चक्रटीका ।

विषयः । तान्त्रिकस्य षट्चक्रस्य व्याख्यानम् ।

---

No. 383. षट्चक्रक्रमदीपिका. By रामभद्रसार्व्वभौमः. Substance, country-made paper, 14½ × 3½ inches. Folia, 18. Lines, 6 on a page. Extent, 300 çlokas. Character, Bengali. Date, ? Place of deposit, Kālikaccha District Tripurā, Paṇḍita Rājacandra Sārvvabhauma. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ गुरवे नमः ।

ॐ सपत्नीकं गुरुं नत्वा ... ... ... ... ।

रामभद्रसार्व्वभौमः कुरुते चक्रदीपिकाम् ॥

अथ षट्चक्रविवरणम् । तत्र प्रथमं सृष्टिक्रमः । इत्यादि ।

**End.** तथापि पद्मद्वयसम्पुटमध्ये विचारस्य बाधो न भवति । इत्यासां विस्तरः ।

**Colophon.** इति रामभद्रसार्व्वभौमभट्टाचार्य्यविरचितायां षट्चक्रक्रमदीपिकायां षट्-चक्रक्रमविवरणं समाप्तम् ॥

**विषयः ।** सृष्टिनिरूपणम् । पञ्चभूतनिरूपणम् । इन्द्रियनिरूपणम् । इन्द्रियगुण-निरूपणम् । सप्तपातालस्थाननिरूपणम् । चक्रभेदनिरूपणञ्चेति ।

---

**No. 384 षट्चक्रदीपिकाटीका.** Substance, country-made paper, 16 × 3 inches. Folia, 18. Lines, 7 on a page. Extent, 400 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamansiṁha Yaçodal, Paṇḍita Kālicandra Bhaṭṭācāryya. Appearance, old. Prose. Correct.

**Beginning.** ॐ नमो भवान्यै । अथेति अथशब्दो मङ्गलपूर्व्वकानन्तर्य्यार्थः । उक्तञ्च ।

ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।

कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ ॥ इत्यादि ।

**End.** न विद्यते मलं पापं यस्मात् निर्म्मलं वा श्रीमद्गुरुपादपद्मयुगलमाननितुं शीलमस्य यतं संयतमन्तर्मनो यस्य स इति ॥ ० ॥

**Colophon.** इति पूर्णानन्दीययोगचिन्तामणिनाम-षट्चक्रदीपिकाटीका समाप्ता ॥ * ॥

**विषयः ।** पूर्णानन्दविरचितस्य योगचिन्तामणिनामकषट्चक्रग्रन्थस्य दीपिकाख्यटीकाया व्याख्यानम् ।

---

**No. 385. षट्चक्रनिरूपणटीका.** By रामवल्लभः. Substance, country-made paper, 18 × 4 inches. Folia, 20. Lines, 8 on a page. Extent, 300 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā Vikramapura, Ātpāḍā, Paṇḍita Prasannacandra Vidyāratna. Appearance, new. Prose. Generally correct.

**Beginning.** मोहान्धकारविध्वंसि भवभीतिभयापहम् ।

भवानीचरणद्वन्द्वं भज भाग्यवशाज्जनः ॥

पूर्णानन्दोदितानन्दविरचाङ्कुरकारिकाम् ।
विशदीकुरुते नूनं द्विज-श्रीरामवल्लभः ॥
अथेत्यादि । अस्यार्थः । ग्रन्थारम्भे विघ्नविघाताय अथायशब्दो मङ्गलार्थः । षट्चक्राणि. क्रमेणोद्गतः प्राप्तः प्रकाशः । परमानन्दस्य मोक्षस्य निर्व्वाह-सम्पादकः प्रथमाङ्कुर उच्यते । षट्चक्रनिरूपणं क्रियते इत्यर्थः । अयं भावः । परमानन्दसम्पादकसामग्री मत्र प्रथमाङ्कुरः प्रथमसामग्रीविशेषः । षट्चक्रं निरूप्यते । अर्थात् परमानन्देन प्रकाश्यते इति यावत् ॥ इत्यादि ।

**End.** कीदृशं मोक्षज्ञाननिदानं मुक्तिजनकज्ञानस्यादिकारणं पुनः शुद्धं शास्त्रसम्मतं पुनः शुद्धं शोभनप्रकारेण शुद्धं सर्व्ववादिसम्मतमित्यर्थः । योगी कीदृशः यतात्ममनाः संयतात्ममनाः वशीकृतचित्त इत्यर्थः ॥

**Colophon.** इति चन्द्रद्वीपान्तर्गतनवमतपुराख्यग्रामनिवासि-श्रीरामदुर्लभशर्म्मणा कृता षट्-चक्रनिरूपणटीका समाप्ता ।

विषयः । पूर्णानन्दकृतस्य षट्चक्रनिरूपणस्य व्याख्यानम् ॥

---

**No. 386.** षटपदीमञ्जरी. By शङ्करानन्दतीर्थः. Substance, country-made paper, 17 × 3½ inches. Folia, 15. Lines, 9 on a page. Extent, 290 çlokas. Character, Bengali. Date, Sk. 1699. Place of deposit, District Vãkuḍā Viṣṇupura, Paṇḍita Rāmavallabha Bhaṭṭācāryya. Appearance, old. Prose. Generally correct.

**Beginning.** श्रीकृष्णः ।
निर्जेष्टसम्प्रदानकल्पकल्पभूरुहाकृतिम् ।
दुरन्तविघ्नवारिदप्रभञ्जनं निरञ्जनम् ॥
मदीयचित्तसारसप्रबोधभास्करं परम् ।
रसालमूलवासिनं भजामि विघ्ननायकम् ॥
श्रीनन्दनन्दनममन्दसुरेन्द्रवृन्द-
सान्द्रानुरागपरिभावितपादपद्मम् ।
वंशीरवाश्रुतविमोहितगोपगोपी-
सन्दोहमिन्दुमुखमच्युतमानतोऽस्मि ॥
सौभाग्यकल्परससारसमादरेण
योगीन्द्रवृन्दमधुपैरुपगीयमानम् ।

सद्भागधेयमखिलार्थनिदानभूतं
केदारपुष्पसम्भूतमानतोऽस्मि ॥
वेदान्तार्थविचारजन्यविषयाविध्वस्तभेदाशयं
नानातन्त्रपदार्थसंशयघनध्वान्तार्कमानन्ददम् ।
नानादेशदिगन्तसन्ततयशःप्राशावकाशं गुरुं
श्रीनारायणतीर्थपादमनिशं भक्त्यन्तमूर्त्तिं भजे ॥
मदीयपादजीवनं स्वधामघं धुनोत्यलम् ।
सुरागतावसन्ततं तनोति शं दृगञ्चलम् ॥
यदाननाजराजके विभाति भारती नटी ।
नतः सहस्रधा सदाशिवाख्यदेशिकान् गुरून् ॥
अथ सच्चिदानन्दात्मकमद्वितीयं ब्रह्मैव निर्मलसत्त्वप्रधानमायोपाधिकं सत्
ईश्वरभावमुपजगाम ॥ जीवेशावभासेन करोतीत्यादि श्रुतेः । स च माया-
प्रतिविम्बित ईश्वरसंक्षेपहृत् ॥ इत्यादि ।

End. इदानीं भगवच्चरणध्यानसाधनं षट्पदीपठनं प्रार्थयते इतीति । इति
पूर्वोक्ताः पद्यन्ते गम्यन्तेऽर्था एतैरिति । पदानि श्लोकाः षण्णां पदानां
समाहारः षट्पदी ॥ यथा षट्पदी भ्रमरी सौरभ्येण सरोजे निवसति तथेयं
श्रीमच्छङ्करवदनसरोजाद्विनिर्गता षट्पदी तन्कर्त्तुर्मम वदनसरोजे सदा
वसतु । तदनेन भगवच्चरणध्यानपूर्व्वक-षट्पदीस्तोत्रपठनस्य पुरुषार्थचतुष्टय-
हेतुत्वं सूचितं भवति । ननु नेयं षट्पदी किन्तु सप्तपदी नारायणकरुणा-
मयेति श्लोकरूपत्वात् । सत्यं नारायणायेति श्लोकस्य फलश्रुतिपरत्वेन
वहिर्भूतत्वादिति षट्पदीत्वमेव । + + + + + + ननु दृशब्दस्य
पादचतुष्टयात्मकश्लोकपरतया व्याख्यातत्वे आर्य्याषट्कस्य कथं षट्पदीत्व-
मिति चेन्नार्य्याया अपि पादचतुष्टयात्मकत्वेनार्य्यात्मकयोरभेदादार्य्याषट्कस्य
तदुपपत्तेः । आर्य्यालक्षणश्लोकं छन्दोग्रन्थविद्भिः ।
श्रीभाष्यकृद्वदनपङ्कजसंप्रसूतं
सद्भक्तिबोधसुनिदानवचोमरन्दम् ।
आस्वाद्य माद्यतितरां मम मानसानि
निःसीमसान्द्रनिजभूमपदं हि लब्ध्वा ॥
षट्पदीनौकया सर्व्वानुद्धार यतोऽस्त्ययम् ।
संसारसागरे मग्नान् यत्नं शङ्करदेशिकम् ॥

भगवच्छङ्करभगवत्पादार्थैः कुसुमैर्वाङ्मयैः कृता ।
षट्पदीमञ्जरी सम्यक् योजिता गुरुपादयोः ॥ ० ॥

**Colophon.** इति श्रीमत्परमहंसपरिव्राजकाचार्य्य-श्रीशिवनारायणानन्दतीर्थगुरुचरण-सेवक-श्रीशङ्करानन्दतीर्थविरचिता षट्पदीमञ्जरी सम्पूर्णा ॥ * ॥
शकाब्दाः १६९९ ॥

**विषयः ।** शङ्कराचार्य्यकृतस्य षट्पदीस्तोत्रस्य व्याख्यानम् ।

---

**No. 387. षटपद्यमाला. By रामरामभट्टाचार्य्यः.** Substance, country-made paper, 17×4½ inches. Folia, 12. Lines, 6 on a page. Extent, 200 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamansimha, Serapura, Paṇḍita Cardrakānta Tarkālaṃkāra. Appearance, fresh. Verse. Correct.

**Beginning.** ॐ नमः परदेवतायै । (अस्य प्रथमपत्रं नास्ति तेन द्वितीयपत्रस्य प्रारम्भवाक्यं लिखितम् ।)
परदाराभिशापे च वचसो यत्र वाग्मिनः ।
शिरोचीनं भवेद्विश्वमात्मनः शुद्धिकारणम् ॥ इत्यादि ।

**End.** " दुर्गे पद्मनचावने शिरतरे चंसारपत्राश्रिते
तत्त्वज्ञानविवोधपुष्पखचिते गुप्तोऽपवर्गैः फलैः ।
तत्त्वज्ञानमचान्धकारनिकरग्रामीकृतश्रीकरे
चक्षेत् कुक्रियचित्तफेचशिशुना शार्दूलविक्रीडितम् ॥
एतत्, पद्यशताष्टपुष्परचिता माला विचित्रा दलै-
र्नानावर्णमयैर्निकामरचिता श्रीरामरामद्विजैः ॥
श्रीमच्छ्रीगुरुपादपङ्कजसपर्य्याचशिषो नित्यश-
स्तत्पादाब्जसुधाभिरञ्जितवपुर्भूयामितीचे वरम् ॥ १०८

**Colophon.** इति श्रीरामरामभट्टाचार्य्यविरचिता षट्पद्यमाला समाप्ता ॥ ० ॥

**विषयः ।** अष्टोत्तरशतश्लोकेन नाडीनां संज्ञालिङ्गवर्णादिनिरूपणम् ।

---

**No. 388. संवत्सरप्रदीपः.** Substance, country-made paper, 13×4 inches. Folia, 96. Lines, 8 on a page. Extent, 2,300 çlokas. Character, Bengali. Date, ? Place of deposit, Bhāṭpāḍā 24-Parganās, Paṇḍita Rāmendra Nyāyavāgiça. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

जयति श्रीसरस्वत्योश्चपाश्योऽसुरद्वारयः ।

धर्म्मार्थकाममोक्षार्थि सत्वप्रत्यूहवारयः ॥

अयने द्वे विषुवे द्वे चतस्रः षड़शीतयः ।

चतस्रो विष्णुपद्यश्च संक्रान्त्यो द्वादश स्मृताः ॥

मृगकर्कटसंक्रान्ती द्वे तूदग्दक्षिणायने ।

तुलामेषे विषुवती गोक्षमध्ये तथापराः ॥

मृगो मकरः । इत्यादि ।

**End.** 'अकालरचितं सन्ध्यागर्ज्जः ।

सन्ध्यागर्ज्जे तथा प्रातर्दिवा नाध्ययनं चरेत् ।

सायं गर्ज्जे तथा रात्रौ नाधीयीत विचक्षणः ॥

रविवारे च संक्रान्त्यां षष्ठ्यां च सप्तमीतिथौ ।

आरोग्यकामस्तु नरो निम्बपत्रं न भक्षयेत् ॥

अमावास्यां पौर्णमास्यां संक्रान्त्यां प्रचयेऽहनि ।

धनपुत्रकलत्रार्थी शौलापिष्टं परित्यजेत् ॥

मन्दमङ्गलषष्ठीषु द्वादश्यां श्राद्धवासरे ।

वस्त्राणां क्षारसंयोगो दहत्यासप्तमं कुलम् ॥ इति प्रकीर्णकं समाप्तम् ।

**Colophon.** समाप्तश्चायं संवत्सरप्रदीपाख्यो ग्रन्थः ॥ ० ॥

**विषयः।** संक्रान्तिनिरूपणम् । वैशाखज्येष्ठादिकृत्यम् । अनन्तव्रतादिः । कुक्कुटीव्रतादिः । अघोरादिः । जन्माष्टम्यादिः । अक्षयादिनिरूपणम् । युगाद्यानिरूपणम् । दशहरादिनिरूपणम् । सावित्रीव्रतादिः । चातुर्मास्यादिनिरूपणञ्च ।

---

**No. 389.** सद्गुरुकल्पद्रुमः. By विश्वनाथचक्रवर्त्ती. Substance, country-made paper, 15 × 5½ inches. Folia, 14. Lines, 5 on a page. Extent, 250 çlokas. Character, Bengali. Date, ? Place of deposit, Āgaḍtalā Vṛddhanagara, Tripurā, Paṇḍita Mineçvara Sārvvabhauma. Appearance, tolerable. Verse. Generally correct.

**Beginning.** नमो वृन्दावनेश्वर्य्यै ।

वृन्दावनेश्वरि वयोगुणरूपलीला-

सौभाग्यकेलिकरुणाजलधेऽवधेहि ।

दासीभवानि सुखयानि सदा सकान्तां
त्वामालिभिः परिवृतामिदमेव याचे ॥ इत्यादि ।

End. चित्तान्याः किल वासना भजत रे वृन्दावनं तं × ×
राधाकृष्णविलासवारिधिरसास्वादं न चेद्विन्दथ ।
त्यक्तुं शक्नुथ न स्पृहामपि पुनस्तत्रैव हृद्दृष्टयो
विश्रब्धाः शृणुतेममेव सततं संकल्पकल्पद्रुमम् ॥

Colophon. इति श्रीविश्वनाथचक्रवर्त्तिविरचितः सङ्कल्पकल्पद्रुमः समाप्तः ॥

विषयः । राधाकृष्णयोर्लीलावर्णनमुखेन राधाकृष्णे मानसार्पणादिविविधप्रकारभजन-कथनम् ।

---

No. 390. संक्षिप्तसारकौमुदी. By अभिरामविद्यालङ्कारः. Substance, country-made paper, 14×2 inches. Folia, 17. Lines, 9 on a page. Extent, 350 çlokas. Character, Bengali. Date, Sk. 1760. Place of deposit, Telivenī grāma *viâ* Gaḍbetā, Paṇḍita Candranātha Cūḍāmaṇi. Appearance, fresh. Prose. Generally correct.

Beginning. ॐ नमः शिवाय ॥ लुक् ॥ अथास्य सकलविषयव्यापकत्वात् ग्रन्थादौ करणं युक्तमिति चेन्न स्वतन्त्रेच्छोर्नियन्तुमशक्यत्वाद् इति केचित् । वयन्तु कारकपादे कर्त्रादिसंज्ञाविधानपूर्व्वकं प्रथमादिविभक्तीनां प्रथमपुरुषादेश विधानमुक्तम् । इत्यादि ।

End. न पञ्च इत्यादौ कथं नान्तत्वान्न दीर्घं इत्यत आह अत्रौ लुगिति । नित्यबहुवचनान्तत्वात् कतिशब्दस्य संख्याप्रश्ने संज्ञय एव कप्रविधानाच्च सिद्धेऽपोरभावः इति बोध्यम् ॥ उत्थाचनिक इत्यादि उत्थस्य उत्थितस्य राज्ञः आसनमर्हतीति तदर्हत्यादाविति ठिकण् ॥ * ॥

Colophon. इति वन्द्यघटीयगयघटकुलोद्भव श्रीलश्रीयुताभिरामविद्यालङ्कारभट्टाचार्य्यविरचितायां संक्षिप्तसारकौमुद्यां षष्ठः सुबन्तपादः समाप्तः ॥ * ॥

शकाब्दाः १७६० ।

विषयः । संक्षिप्तसारव्याकरणस्य सुबन्तपादस्य व्याख्यानम् ।

---

**No. 391.** संक्षिप्तसारटीका (व्याकारदीपिकाख्या) By श्रीविद्याविनोदात्मज-श्रीन्यायपञ्चाननः. Substance, country-made paper, 15 × 3¼ inches. Folia, 244. Lines, 8–9 on a page. Extent, 10,980 çlokas. Character, Bengali. Date, Sk. 1634. Place of deposit, Kāṭhālapāḍā *viâ* Naihāṭi, Paṇḍita Harinātha Baṭṭācāryya, bought by the Government of India, Calcutta. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमः शिवाय ।

नत्वा श्रीहरिचरणं कृत्वा शरणं पितुः पदञ्च मतम् ।
विमलधियां हितजननी क्रियते व्याकारदीपिका यत्नात् ॥
कोऽपि न्यायपुराणकाव्यनिचयालङ्कारवैशेषिक-
व्याकरस्मृतिनाटकश्रुतिगुरुर्विद्याविनोदः स्थितः ।
तत्पुत्रस्य विचारनिर्मलमतेः श्रीन्यायपञ्चानन-
स्योत्सुक्यं सुधियो विधाय विमलां शृण्वन्तु वाचं हितम् ॥
सुगमं निगदेन गम्यते शिशुभिर्दुर्गममेव तत्त्वतः ।
निरवोचमतः प्रयत्नतः परिसंगृह्य च वृत्तिटीकयोः ॥
अनधीत्य शब्दशास्त्रं योऽन्यच्छास्त्रं समीहते ज्ञातुम् ।
... ... ... ... ... ... ... ... ... ... ... ... ... ... ॥

शिवमित्यादि । मङ्गलस्य प्रारिप्सितसमाप्तिं प्रति कारणता विघ्नध्वंसत्वान्वय-व्यतिरेकसमधिगम्येति नैयायिकाः । वयन्तु विघ्नध्वंसं प्रति मङ्गलस्य कारणता समाप्तिस्तु स्वकारणादेवेति ब्रूमः ॥ तथाच गोयीचन्द्रः प्रत्यूहव्यूहनिराकरण-कारणमिति । ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... उच्यते । समासो विधीयते । नाम तु तिङन्तादिवत् सुप्युक्तं नामेव यद्वा प्रधानस्य विशेष्यत्वविवक्षायाः सम्भूतत्वात् स औ जस् इति योग-विभागात् ॥ इत्यादि ॥

**End.** कति पुरुषाः कति स्त्रियः कति धनानीत्युदाहरणयोपादानं कति शब्दस्य लिङ्गविशेषकाद्यभावसूचनार्थम् । अतो लुक् कति पञ्चादिरिति कृतेऽपि जस्शसोर्यत्वे सिद्धे इत्यादि एकवचनद्विवचनान्तयोः संख्याया नियत-त्वादेव संख्याप्रश्नार्थं कतिशब्दप्रयोग एव न सम्भवतीति तिङ्सिद्ध्यो रभाव इति भावः । ... ... ... ... ... ... ... ... ... ... ... ... ... ... यद्वा अत्र एकेषो ... न क्रियते किन्तु जस्शसोर्लुकि च अन्यर्थमिति-स्याकरस्यैव बोद्धुभवति । स्यादौ तत्पुत्र विधानेन ... स्येव क्रियतां तथा

इति सवर्णदीर्घेणेष्टापत्तिरेव । प्रथमं सन्धिकार्य्याभावात् अकारस्य न सन्धिः । टा भिस् ङे ङसि ङसामित्यस्य प्रवृत्तौ पश्चात् सवर्णदीर्घः स्यात् यद्वा अल्पपरत्वान्नलोपे अन्तर्वर्त्तिनोऽतः स्थाने आदिशाभावे अङ्गाभिरिति साध्यस्य सिद्धिर्न स्यात् ॥

**Colophon.** इति श्रीकुलकलानिधिमहामहोपाध्याय श्रीविद्याविनोदात्मज-श्रीन्यायपञ्चाननकृतायां संक्षिप्तसारटीकायां व्याकारदीपिकायां षष्ठः सुबन्तपादः समाप्तः ।

**विषयः ।** संक्षिप्तसाराख्यव्याकरणस्य व्याख्यानम् ।

---

**No. 392.** **सङ्क्षेपशङ्करजयः**. By **माधवाचार्य्यः**. Substance, country-made paper, $17 \times 4\frac{1}{2}$ inches. Folia, 69. Lines, 10 on a page. Extent, 2,000 çlokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Çyāmapukura, Bābu Nagendranātha Vasu. Appearance, fresh. Verse. Correct.

**Beginning.** ॐ नमो गणेशाय ।
प्रणम्य परमात्मानं श्रीविद्यातीर्थरूपिणम् ।
प्राचीनशङ्करजये सारः संगृह्यते स्फुटम् ॥
यद्वद्दृष्टानां पटलो विशालो विलोक्यतेऽल्पे किल दर्पणेऽपि ।
तद्वन्मदीये लघुसंग्रहेऽस्मिन्नुद्वीक्ष्यतां शाङ्करवाक्यसारः । इत्यादि ।

**End.** इन्द्रोपेन्द्रप्रधानैस्त्रिदशपरिवृढैः स्तूयमानः प्रसूनैर्दिव्यैरभ्यर्च्यमानः सरसिजभवदत्तहस्तावलम्बः ।
आरुह्योक्षाणमग्र्यं प्रकटितसुजटाजूटचन्द्रावतंसः
प्रत्यग्राक्षोकशब्दं समुदितमृषिभिर्धाम नैजं प्रतस्थे ॥ * ॥

**Colophon.** इति श्रीमाधवीये तच्छारदापीठवासगः ।
संक्षेपशङ्करजये सर्गः पूर्णोऽपि षोडशः ॥
समाप्तश्चायं ग्रन्थः ॥

**विषयः ।** शङ्कराचार्य्यस्य जीवनवृत्तान्तः ।

---

**No. 393.** **सङ्ख्याप्रकाशटीका**. By **काशीरामवाचस्पतिः**. Substance, country-made paper, $16 \times 3$ inches. Folia, 28. Lines, 9 on a page. Extent, 650 çlokas. Character, Bengali. Date, ? Place of deposit, District Vākuḍā Viṣṇupura Kādākuli, Paṇḍita Raghurāma Tarkaratna. Appearance, tolerable. Prose. Generally correct.

**Beginning.**

ॐ नमो गणेशाय ॥

दिरक्षिषुर्यो निजधर्म्मसेतून्
युगे युगे सत्त्वमयानि धत्ते ।
वपूंषि नानागुणकर्म्मभाञ्जि
भूयात् स देवो भवतां विभूत्यै ॥
भट्टाचार्य्यशिरोरत्नन्यायालङ्कारसूनुना ।
संख्याप्रकाशकव्याख्या काशीरामेण तन्यते ॥

अथ सकलशास्त्राभिज्ञः श्रीमान् नन्दरामतर्कवागीशभट्टाचार्य्यः इदानीन्तनान् मन्दबुद्धीन् पूर्व्वपूर्व्वपण्डितकृत नानाविधतत्त्वग्रन्थाध्ययनासमर्थानवलोक्य परमकारुणिकतया अध्ययनभावनाभ्यां तत्त्वग्रन्थेभ्यः सारमाकृष्य संख्या-कथनमिषेण संख्याप्रकाशकनामकग्रन्थं संक्षिप्तसारं तेषां हितार्थं रचितवान् । अथ एषोऽपि तेषां नातिसुगमो बभूव अतो यथामति तद्व्याख्याने ममोद्यमः । तत्र तावत् ग्रन्थकृत् ग्रन्थसमाप्तिप्रतिबन्धकीभूतविघ्नसम्भावनया तन्नाशाय कृतश्रीश्वरनमस्कारं शिष्यशिक्षार्थमादौ निबध्नन् सुचिरतरकालीनविबुध-पदावस्थितिहेतवे यशसे स्वनामयौगिकग्रन्थनामद्वारा प्रष्टत्यङ्गमभिधेयञ्चाह देहवानित्यादि । यः शुद्धसत्त्वस्वरूपया आत्ममायया देहवानिव पाञ्च-भौतिकदेहविशिष्ट इव भाति तथाहि ईश्वरस्य शुद्धसत्त्वात्मिका मायैव देहः । इत्यादि ।

**End.**

अन्येति अन्यापि द्वात्रिंशदादिकापि संख्या मदुक्तया परोपाट्या रीत्या बोद्धव्या । ननु कथं अनुक्तज्ञानं भविष्यति तत्राह ईङ्गितेनेति हि यतः धीराः पण्डिता ईङ्गितेनापि परहृत्स्थितं जानन्ति तथाच यदि धीरा ईङ्गितेनापि परहृत्स्थितं जानन्ति तदा उक्तया परिपाट्या ते तत् ज्ञास्यन्ति तत्र चित्रमिति भावः । तथापि यत्किञ्चित् अन्यसंख्या प्रदर्श्यते यथा गीताध्यायपाठनान्या(?) अपराधा द्वात्रिंशत् यथा—

अहन्यहनि यो मर्त्यो गीताध्यायन्तु संपठेत् ।
द्वात्रिंशदपराधाञ्च अहन्यहनि मुच्यते ॥ इति ।

ते च अपराधा वराहपुराणान्निष्कृष्य लिख्यन्ते । भगवद्भक्तानां क्षत्रियसिद्धान्न भोजनम् ॥ १ ॥ अजीर्णे सति विष्णोरुपसर्पणं ।३२॥ व्यभिचारिभावास्त्रय-स्त्रिंशत् तदुक्तं काव्यप्रकाशे ॥ ३३ ॥

त्रयस्त्रिंशदमी भावाः समाख्याताः स्वनामत इति ।

एवमन्यापि संज्ञा बोध्या ग्रन्थविस्तारभयान्नोक्ता
कृताञ्जलिद्वयपुटं मुहुरत्नमाङ्गे
युष्मान् प्रणम्य कवयो विनिवेदयामि ।
व्याख्येयमर्थरचितापि सदूषणापि
दृष्टा भवद्भिरवधाय दयाविधेयैः ॥
श्रीश्रीजाने दयाधाने चरणाम्बुजतले तव ।
श्रीकाशीरामकृतिना कृतिरेषा समर्पिता ।

Colophon. इति संज्ञाप्रकाशव्याख्या समाप्ता ॥ ० ॥

विषयः । नन्दरामतर्कवागीशभट्टाचार्य्यकृतस्य संज्ञाप्रकाशनामकस्य नानाशास्त्रसंग्रहीत-तत्त्वबोधात्मकग्रन्थस्य व्याख्यानम् ।

---

**No. 394.** संग्रहसारः. By रामदेवद्विजः. Substance, country-made paper, 18 x 4 inches. Folia, 63. Lines, 6 on a page. Extent, 1,250 çlokas, Character, Bengali. Date, ? Place of deposit, District Ḍhākā. Post Office Baidyerbāzār, Kṛṣṇapura, Paṇḍita Madanamohana Bhaṭṭācāryya. Appearance, tolerable. Prose and verse. Generally correct.

Beginning. श्रीरामस्य पदारविन्दयुगलं नत्वाथ वागीश्वरीं
हेरम्बं तपनादिकं यतिगुरुं चक्रं यशोदासुतम् ।
नानाज्ञानमतो विलोक्य सकलं गर्गादिविप्रोदितं
वक्ष्ये संग्रहसारमल्पसुगमं श्रीरामदेवो द्विजः ॥
ग्रन्थोऽत्र प्रथमं हि जन्मसमयश्छायादियन्त्रैः स्फुटं
तत्कालप्रभवा विलग्नरचिता कार्य्या ततश्च ग्रहाः . इत्यादि ॥

End. वेदोऽग्नेर्जलधिर्गजाब्धिरचितो शून्याब्धिभिः पञ्च च
पञ्चाब्धित्रितिभिः शरः श्रुतिगुणैर्वाणोऽङ्कयुग्मैः सप्त ।
बाणः कालगुणैः शरोऽम्बरयुगैरङ्केन्दुभिर्नागतो
वेदो बाणगुणैर्गुणोऽङ्कविभिन्नैरक्षाब्धिभिः पावकः ॥

Colophon. (अन्यत् परिसमाप्तिसूचकं वाक्यं नास्ति)

विषयः । षड्वर्गफलम् । नवांशफलम् । लग्नाधिपादिफलम् । प्रथमादिभावफलम् । प्रथमादिद्वादशभावस्य फलम् । सप्तग्रहादिकोष्ठीफलम् । तन्वादिभावविचारफलम् । शुभाशुभ-

इष्टलग्ननिरूपणम् । त्रिपक्षीयोगकथनम् । पक्षस्फुटनिरूपणम् । सिंहासनादियोगफलम् । माष-फलम् । तुलादिनिरूपणम् । अष्टवर्गनिरूपणम् । मन्दाष्टवर्गनिरूपणम् । वर्षदशानिरूपणम् । तस्यान्तर्दशानिरूपणम् । केतुपताकिनिरूपणम् । मासिकदशानिरूपणम् । तस्यान्तर्दशा-निरूपणम् । पञ्चस्वरानिरूपणम् । पञ्चस्वरामते आयुर्गणनम् । योगिनीदशानिरूपणम् । तस्याः प्रत्यन्तरदशानिरूपणम् । आयुर्दशानिरूपणम् । तीर्थस्नाननिरूपणम् । गुरोरष्टवर्गमते पुत्रादि-मतनिरूपणम् । नष्टकोष्ठीज्ञानम् । चतुर्दशकोष्ठीनिरूपणम् । अयनादिलग्नमाननिरूपणम् । जातचक्रनिरूपणम् । मासफलनिरूपणञ्च ।

---

**No. 395.** सत्क्रियासारदीपिका. Substance, country-made paper, 13 x 4 inches. Folia, 49. Lines, 7 on a page. Extent, 1,000 çlokās. Character, Bengali. Date, ? Place of deposit, District Vãkuḍā Kucekol, Bābu Yogīndranātha Siṁha Deva. Appearance, tolerable. Prose. Generally correct.

**Beginning.** श्रीश्रीराधाकृष्णः ।

प्रणम्य सच्चिदानन्दं जगतां सेव्यमीश्वरम् ।
श्रीकृष्णपरमानन्दमनन्याभीष्टदायकम् ॥
वक्ष्ये गृहस्थद्विजादीनामनन्यानां विशेषतः ।
सत्क्रियासारदीपिकां तां विवाहादिपद्धतिम् ॥
श्रीमद्गोपालभट्टोऽयं साधूनामाज्ञया श्रमम् ।
भगवद्धर्मरक्षार्थं भक्तानां वैदिकी तु या ॥
कृता याप्यनिरुद्धेन भीमभट्टेन या कृता ।
श्रीमद्गोविन्दानन्देन कर्म्मणां पद्धतिः कृता ॥
श्रीनारायणभट्टेन कर्म्मठानान्तु वैदिकी ।
भट्टश्रीभवदेवेन छन्दोगानान्तु या कृता ॥
वर्णाश्रमान्त्यजादीनां वेदैः पौराणिकादिभिः ।
मन्वादिधर्म्मशास्त्रोक्तैर्वचनैः सप्रमाणकैः ॥
श्रीमद्गोविन्दभक्तानां सेवानामपराधतः ।
मया तृथा कृता किन्तु पितृदेवार्च्चनं विना ॥
मन्यपरमन्यकारवत् प्रन्यकर्तृमेनाप्रहिषस्य सनाम दातुमनुचितम् । यथा,—
अवज्ञारविमूढात्मा कर्त्ताहमिति मन्यते ।

इति दोषश्रवणभयात् । तथापि संगृह्यानां साधूनामाज्ञया सनाम इतम् । श्रीमद्गोपालभट्टनामायं कोऽपि जीवः श्रीमद्गोपालभट्टत्वेनेति ज्ञापितम् । श्रीकृष्णचैतन्यचरणारविन्दमकरन्दसततपायित्वेन सदैव साधुनिर्देशवश्यवर्णीति भावः । एवं विशिष्टोऽहं श्रीकृष्णं प्रणम्य श्रीकृष्णशब्दार्थः पुरैव व्याख्यातः । किं विशिष्टं सच्चिदानन्दं गुणातीतानिर्व्वचनीयपरममनोहरलावण्यघनसुखस्वरूपं अतएव जगतां सेव्यं । अत्रायं भावार्थः ॥ इत्यादि ॥

End. ततोऽपरे श्रीमन्नारायणस्य श्रीमत्कृष्णादिविविधावतारोपासकाः । तत्तन्निजनिजसेवकपार्षदत्वेन तेषां तेषां तान् तान् पार्षद्भक्तान् प्रपूजयेयुः । अयं भावार्थः ।

Colophon. अतःपरं खण्डितम् ॥

विषयः । वैष्णवानां अन्यकर्म्मत्यागविधिनिरूपणमुखेन व्याख्यासहित-वैष्णवकर्म्मादिनिरूपणम् ।

---

No. 396. सदाशिवसंहिता. Substance, country-made paper, $12 \times 2\frac{1}{2}$ inches. Folia, 12. Lines, 8 on a page. Extent, 250 çlokas. Character, Bengali. Date, ? Place of deposit, District Vākuḍā Viṣṇupura, Paṇḍita Rūparāma Bhaṭṭācāryya. Appearance, tolerable. Verse. Generally correct.

Beginning. ॐ नमो रामचन्द्राय ।

श्रीमुनय ऊचुः ।

श्रुतमस्माभिरीशान रहस्यं परमाद्भुतम् ।

इदं विश्वं कथं जातं सौमित्रे वद तत्त्वतः ॥

सौमित्रिरुवाच ।

शृणुध्वं मुनयः सर्व्वे रहस्यं हरिसम्भवम् ।

यथादौ परिसम्भूतं यस्मिन्नेव प्रलीयते ॥

सुमेरौ परं धाम्नां संवादं समभूत् किल ॥ इत्यादि

End. गोलोके नियतं वासं सत्यं सत्यं वदाम्यहम् ।

देवैरपि दुराधर्षाः कियद्भिर्मनुजैरपि ॥

अश्वमेधसहस्राणि वाजपेयशतानि च ।

अटनं सर्व्वतीर्थेषु प्रदानं सर्व्वसम्पदाम् ॥

एतद्धि ध्यानयोगस्य कलां नार्हन्ति षोड़शीम् ।
ब्रह्महत्यासहस्राणि ज्ञानाज्ञानकृतानि च ॥
स्वर्णस्तेयसुरापानगुरुतल्पयुतानि च ।
कोटिकोटिसहस्राणि ह्युपपापानि यान्यपि ॥
सर्व्वाण्यपि प्रणश्यन्ति रामधामविलोकनात् ॥ ० ॥

**Colophon.** इति सदाशिवसंहितायां नित्यलक्षणायां श्रीरामानुजश्रुतिसंवादे गोलोकवर्णनं नाम द्वितीयोऽध्यायः ॥ ॐ तत्सत् ॥

**विषयः।** प्रथमध्याये रामानुजश्रुतिसंवादेन निजरूपवर्णनादिः । द्वितीयाध्याये गोलोकवर्णनादिश्च ॥

---

**No. 397. सद्वैद्यभावावलिः.** By **जगन्नाथगुप्तकवीन्द्रः.** Substance, country-made paper, 12 × 4 inches. Folia, 4. Lines, 9 on a page. Extent, 125 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Vikramapura, Gāupāḍā grāma, Bābu Rājakumāra Dāsa. Appearance, new. Verse. Generally correct.

**Beginning.** नमो गणेशाय ।
आचारादिगुणाधीनां प्रतप्तकनकद्युतिम् ।
नमामि कुलदामाद्यां सानन्दं कुलदेवताम् ॥
सच्चावंशोद्भवा वैद्या येऽद्यापि च सच्चोज्ज्वलाः ।
ये च भावान्तरं प्राप्तास्तानहक्ष्ये समासतः ॥
नगर्य्यां सेनहाट्यान्तु गतिर्येषां न विद्यते ।
तैषां सद्वैद्यसद्भावज्ञानाय खलु कथ्यते ॥
आदौ पूर्व्वक्रमेणैव दुधिवंशो निगद्यते ।
गणद्विदुमाधवाख्य दुधिवंशसमुद्भवाः ॥
गणसेनस्य तनयौ श्रीधरो हरिवंशकः ।
श्रीपतिरघुपत्याख्यौ श्रीधरस्य सुतावुभौ ॥ इत्यादि ।

**End.** अनेन यो भिषग्वंशः स्वल्पेनापि न वर्णितः ।
स एव साध्यो विज्ञेयो भुवनमल्लवंशजे ॥
भिषग्वरः काश्यपवंशचन्द्र-
मणिस्वरूपोऽजनि कायुगुप्तः ।

तस्यात्मजोऽभूद्वनमालिगुप्तः
पुण्येषु सक्तो वनमालिभक्तः ॥
ततोऽभवत् कार्पटिनामधेयः
सुतः पवित्रो मदनस्ततोऽभूत् ।
सुतोऽभवत् तस्य सुतः प्रतिष्ठः
श्रितो जगन्नाथ इति प्रदिष्टः ॥
सुधाकरस्तस्य सुतः सुदृप्तः
सुधाकरस्तत्कुलकैरवेषु ।
पुण्यौघतुष्टीकृतकायुवंशः
क्षितिं गतोऽभूत्+ + +रिवांशः ॥
सुधाकरस्यापि सुतः सुशीलो
मृत्युञ्जयः शुद्धमतिर्बभूव ।
तस्यात्मजोऽभूत् कविराजसंज्ञो
विद्वद्वरोऽभूदपि राघवाख्यः ॥
सुतोऽभवत् तस्य च रामभद्रो
विद्वद्गणेन्द्रः कविचन्द्रसंज्ञः ।
'उदारबुद्धि+ +पुण्यकर्मा
तस्यात्मजोऽभूच्छिवनाथनामा ॥
तस्यात्मजः सूक्ष्ममतेः सुशीलः
ख्यातो जगन्नाथ इति क्षितौ यः ।
तेन प्रतेने भिषजां समासात्
सद्वैद्यजानां सदसद्विचारः ॥

Colophon. इति श्रीजगन्नाथगुप्तकवीन्द्रकृतसद्वैद्यभावावलिः समाप्ता ॥

विषय: । अम्बष्ठकुलजातानां केषाञ्चित् सद्वैद्यानां वंशावलिकथनम् । तत्र तेषां सद्-सद्भावप्राप्तिकथनञ्च । अथ दुष्टिवंशकथनम् । दुष्टिवंशजातस्य गणसेनतनयस्य श्रीधरसेनस्य वंशकथनम् । विष्णुसेनवंशवर्णनम् । माधवसेनवंशवर्णनम् । विनायकसेनवंशवर्णनम् । कमल-सेनवंशवर्णनम् । विकर्त्तनसेनवंशवर्णनम् । बलभद्रसेनवंशवर्णनञ्च । अथ दासवंशवर्णनम् । तत्र नारायणदास-जिनदास-अरविन्ददास-जयदासानां वंशादिवर्णनञ्च । अथ त्रिपुरगुप्तवंशादि-कथनम् । कायगुप्तवंशादिवर्णनञ्च ॥ इति ।

---

**No. 398.** सन्तानद्वादशीव्रतम् . Substance, palm-leaf, 13 × 1½ inches. Folia, 9. Lines, 2 on a page. Extent, 50 çlokas. Character, Bengali. Date, ? Place of deposit, Vidyākūṭa Tripurā, Bābu Kedāranātha Bhaṭṭācāryya. Appearance, new. Prose and verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय । अथ सन्तानद्वादशीव्रतम् । तत्र प्रथमं सूर्य्यार्घ्यं दत्त्वा स्वस्तिवाचनपूर्व्वकं संकल्पं कुर्य्यात् विष्णुरोमित्यादि ।

**End.** इदं सन्तानकं नाम याः करिष्यन्ति भक्तितः ।
अवैधव्यन्तु सौभाग्यं लभन्ते सन्ततिं शुभाम् ॥

**Colophon.** इति सन्तानद्वादशीव्रतकथा समाप्ता ।

**विषयः ।** शुभसन्तानादिलाभकारकव्रतविशेषसाधननियमादिकथनम् ।

---

**No. 399.** सम्बन्धविवेकः . By भवदेवभट्टः . Substance, country-made paper, 14 × 3 inches. Folia, 12. Lines, 6 on a page. Extent, 250 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamanasiṁha, Kātihāli, Paṇḍita Rājakṛṣṇa Nyāyabhūṣaṇa. Appearance, tolerable. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय । अथ सम्बन्धं विवेचयिष्ये । तत्र मनुः ।
असपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्म्मणि मैथुने ॥
या मातुः सपिण्डा न भवति सा दारकर्म्मणि दारत्वसम्पादके कर्म्मणि तथा मैथुने मिथुनसाध्येऽग्न्याधानादौ पुत्रोत्पत्तौ च प्रशस्तेति सम्बन्धः । इत्यादि ।

**End.** सर्व्वत्र प्राङ्मुखो दाता पत्नीता च उदङ्मुखः ।
अयन्तु(?)विधिर्ज्ञाने विवाहे तु व्यतिक्रमः ॥
व्यतिक्रम इति प्रत्यङ्मुखः सम्प्रदाता पत्नीता प्राङ्मुखः ॥ उक्तम्,—
प्राङ्मुखायाभिरूपाय वराय शुचिसन्निधौ ।
प्रत्यङ्मुखस्तु दाता वै कन्यां दद्यात् स्वलङ्कृतामिति ।

**Colophon.** इति भवदेवभट्टकृतः सम्बन्धविवेकः समाप्तः ॥ * ॥

**विषयः ।** विवाहसम्बन्धविचारादिमुखेन सपिण्डादिनिरूपणम् । उद्वाहादिनिरूपणञ्च ।

---

**No. 400.** **सम्मोहनतन्त्रम्.** Substance, country-made paper, 10 × 8 inches. Folia, 44. Lines, 12 on a page. Extent, 1,800 çlokas. Character, Nāgara. Date, ? Place of deposit, Govardhana Sarāi Benares, Paṇḍita Bindhyeçvarīprasāda Dube. Appearance, old. Verso. Generally correct.

**Beginning.**

ॐ नमः श्रीमङ्गलमूर्त्तये ।
साकारत्वं निराकारज्ञानसागररूपिणे ।
देवानां देवदेवाय तस्मै श्रीगुरवे नमः ॥
देव्युवाच ।
देवदेव महादेव सर्व्वसिद्धिप्रवर्त्तक ।
त्वत्तः श्रुतं मया सर्व्वं रहस्यातिरहस्यकम् ।
इदानीं देवदेवेश रहस्यमपरं विभो ॥
शिव उवाच ।
रहस्यातिरहस्यञ्च कथं त्वयि निवेद्यताम् ।
तथापि तव सद्भक्त्या रहस्यमपि कथ्यते ॥
काली तारा छिन्नमस्ता सुन्दरी बगला रमा ।
मातङ्गी भुवना सिद्धविद्याथ भैरवी तथा ॥
धूमावती च दशमी महाविद्या दश स्मृताः ।
चण्डेश्वरी लघुश्यामा त्रिपुटादिप्रयोगतः ॥
त्रयोदश महाविद्याः शृणुष्व षोडशी शिवे ।
दश पूर्व्वास्तु संग्रह्य सनदुर्गाञ्च शूलिनीम् ॥
अश्वारूढां महाविद्यां त्रैलोक्यविजयाभिधाम् ।
वाराहीमन्नपूर्णाञ्च कलासंख्या प्रकीर्त्तिता ॥
महाकालमते देवी एकपञ्चाशदीरिता ।
महालक्ष्मीं समारभ्य महाकालकलात्मकम् ।
विद्यासङ्ख्या त्वया प्रोक्ता त्रितयं पूर्व्ववत् भवेत् ॥ इत्यादि ।

**End.**

चत्वारिंशत्प्रभेदेन भक्ष्यराक्षसजातयः ।
पूर्व्वक्रमेण संसाध्य दुष्टानेतान् विनाशयेत् ॥
गोपनीयं गोपनीयं गोपनीयं पुनः पुनः ।
रहस्यातिरहस्यञ्च रहस्यातिरहस्यकम् ।
इति संक्षेपतः प्रोक्तं किमन्यत् श्रोतुमिच्छसि ॥

**Colophon.** इति श्रीमद्चोभ्यतारासम्वादे संमोहनतन्त्रे द्वितीयखण्डे प्राणायातिवर्णने दशमः पटलः ।

**विषयः ।** पीठवाणीप्रभेदेन लिपिभूषाप्रभेदेन च शाम्भवानां विंशतिभेदविद्यापीठनिर्णयः । पुष्पनिर्णयः । गौड़ादिदेशभेदे तन्त्रादिभेदनिरूपणम् । दशमहाविद्यानिरूपणम् । यन्त्रभेदादिनिर्णयश्च ॥

---

**No. 401.** सर्व्वतोभद्रचक्रटीका. By गौरीकान्तचक्रवर्त्ती. Substance, country-made paper, 12 × 3½ inches. Folia, 5. Lines, 10 on a page. Extent, 175 çlokas. Character, Bengali. Date, ? Place of deposit, Kāṭhālpāḍā *via* Naihāṭi, Paṇḍita Rāmatāraṇa Ṭhākura. Appearance, very old. Prose and verse. Generally correct.

**Beginning.** ॐ नमः श्रीसूर्य्याय नमः ।
अथातः सम्प्रवक्ष्यामि चक्रं त्रैलोक्यदीपकम् ।
विख्यातं सर्व्वतोभद्रं सद्यः प्रत्ययकारकम् ॥
उद्गदश विन्यस्य तीर्य्यग्रेखास्तथा दश ।
एकाशीतिपदं चक्रं जायते नात्र संशयः ॥
अकारादिस्वराः कोष्ठे ईशादि विदिशि क्रमात् ।
दक्षिमार्गेण दातव्याः षोड़शैव चतुर्भ्रमम् ॥ इत्यादि ।

**End.** वर्त्तमानेति द्रव्यादीनां वर्त्तमाने शून्ये शोधितषट्चक्रक्रमेण विंशत्यंशकल्पनया तद्भागो ह्रसति कृष्णे तद्भागो वर्त्तते इत्यर्थः । देशध्वंसा इत्यादि सर्व्वं सुगमम् ॥

**Colophon.** इति सर्व्वतोभद्रचक्रटीका गौरीकान्तचक्रवर्त्तिकृता समाप्ता ॥ ० ॥ ● .

**विषयः ।** तन्त्रोक्तस्य सर्व्वतोभद्रचक्रादेर्व्याख्यानम् ।

---

**No. 402.** सापेक्षवादः. Substance, country-made paper, 11 × 2 inches. Folia, 3. Lines, 7 on a page. Extent, 40 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Post Office Pilkhānā Vāḍḍānagara, Paṇḍita Kailāsacandra Tarkaratna. Appearance, old. Prose. Correct.

**Beginning.** ॐ नमो दुर्गायै । समासघटकपदोपस्थाप्येन समासाघटकपदार्थस्य नान्वयः । आकाङ्क्षाविरहात् । अतएव ऋद्धस्य राजमातङ्गा इत्यादौ ऋद्धादिपदार्थस्य राजादौ योग्यतासत्त्वेऽपि नान्वयः । यद्यपि तत्समभिव्याहार-

रूपाकाङ्क्षा सम्भवति तथापि समभिव्याहारमात्रं नाकाङ्क्षा । अपितन्वय-बोधविशेषे पदविशेषयोः समभिव्याहारः । इत्यादि ।

End नन् कथमिदमुक्तं यावता प्रभेयस्य कर्मणो धात्वर्थेऽभिनिवेशात् धातो-रकर्म्मता । यथा फलं गच्छति । पच्यति ॥

Colophon. सापेक्षवादः समाप्तः ।

विषयः । सापेक्षत्वेऽपि गमकत्वात् समास इति न्यायस्य स्वरूपादिविवेचनम् ।

---

No. 403. सारनिर्णयः. By रमाकान्तचक्रवर्त्ती. Substance, palm-leaf, 17 × 1½ inches. Folia, 30. Lines, 3 on a page. Extent, 600 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Post Office Vaidyervāzār, grāma Candrakīrtti, Paṇḍita Rajanīkānta Bhaṭṭā-cāryya. Appearance, old. Prose. Generally correct.

Beginning. ॐ नमो गणेशाय ।

काशीशचरणाम्भोजं चतुर्वर्गफलप्रदम् ।

नत्वा वक्ष्यामि यत्नेन सूत्र बोधविनायकम् ॥

अर्थवदधातुरप्रत्ययः प्रातिपदिकम् । धातुभिन्नं प्रत्ययभिन्नं यदर्थवत् तत् प्रातिपदिकसंज्ञं भवति अभिधेयनिष्टत्तिप्रयोजनधर्मेषु यद्यप्यर्थशब्दस्तथा-प्यभिधेयवचनोऽर्थशब्दो गृह्यते । अभिधेये निष्टत्त्यादीनामन्तर्भावात् । यत् प्रयोगे यत् प्रतीयते स तस्यार्थः । तथाचोक्तम् ।

शब्देनोच्चार्य्यमाणेन यद्वस्तु प्रतिपद्यते ।

तस्य शब्दस्य तद्वस्तु ज्ञायतामर्थसंज्ञया ॥

स चार्थश्चतुर्धा भिद्यते जातिद्रव्यगुणक्रियेति । तथाचाह ।

शब्दैरेव प्रतीयन्ते जातिद्रव्यगुणक्रियाः ।

चातुर्विध्यादमीषान्तु शब्द उक्तश्चतुर्विधः ॥

स्वार्थो जातिद्रव्यगुणक्रियास्वरूपभेदात् पञ्चविधः स्वार्थो विशेषणार्थानुगम्यमानो दृष्ट इत्यादि उदाहरणं विशिष्टार्थबुद्धिं प्रति विशेषणार्थस्य कारणत्वात् । तथाच । न्यगृहीतविशेषणा बुद्धिर्विशेष्येषूपजायते । तथाच जातौ दृष्टः जातिरत्र विशेषणं प्रति निमित्तभूतं दृष्टत्वम् । नित्यमनेकसमवेतमपि सामान्यं जातिः । गुणः सत्त्वनो धर्मः यथा पटस्य शुक्लो गुणः । क्रिया धात्वर्थः साध्यरूपा तथाच सिद्धं कारकं साध्या क्रिया यथा पक्तुः पाकः ।

द्रव्यं गुणाश्रयः यथा दण्डिनो दण्डः । स्वरूपमजात्यात्मकमसाधारणरूपं यथा डित्थस्य डित्थत्वम् । अर्थवद्प्रत्ययधात्विति सिद्धे यत् नञ्द्वयकरणं तत् तत्पुरुषनिरासार्थम् ॥ इत्यादि ।

**End.** तस्यापत्यं । तस्येति षष्ठ्यन्तमनुकीर्त्य लुप्तपञ्चमीनिर्देशः । षष्ठ्यन्तादपत्येऽभिधेयेऽण् भवति । न पतति वंशो येन जातेन तदिदमपत्यं प्रकृत्यर्थो विशेषणं प्रत्ययार्थो विशेष्यः उपगोरपत्यं औपगवः । एको गोत्रे । गोत्रे वंशेऽभिधेये एक एव प्रत्ययो भवति न द्वितीय इत्यर्थः एतत् सूत्राभावादौपगवस्यापत्यमित्यर्थे प्रत्ययः कथं न स्यात् । सत्यं एकेनैवापतनार्थस्य प्रतिपादितत्वात् कथमपरः प्रत्ययः । कथं गार्गायणः एवं वात्स्यायन इति एकेनापतनार्थप्रतिपादितत्वात् पुनः प्रत्ययविधानं प्रशंसार्थमापादयतीति । तेन युक्तं रागात् । रज्यतेऽनेनेति रागः रागवाचिनः शब्दात् तेन युक्तमित्यर्थेऽण्प्रत्ययो भवति । कुसुम्भेन रक्तं कौसुम्भं वस्त्रम् । ... ... ... ... ... ... ... ... ... ... ... तस्य समूहे । षष्ठ्यन्तात् समूहेऽर्थेऽण्प्रत्ययो भवति । वायसानां समूहो वायसं काकमित्यादि ।

**Colophon.** इति मधुसूदनतर्कवागीशात्मज श्रीरमाकान्तचक्रवर्त्तिविरचिते सारनिर्णये तद्धितप्रकरणीयपरसूत्रार्थविवेचनं समाप्तम् ॥

**विषयः ।** कलापे नाम-कारक-समास-तद्धितप्रकरणानां न सन्ति सम्यक् परिस्फुटानि सूत्राणीत्यनेनात्र सारनिर्णये पाणिन्यादिव्याकरणोक्तसूत्राणां विवेचनं कृतम् । तत्र प्रथमे नामप्रकरणम् । द्वितीये विस्तरेण कारकप्रकरणम् । तृतीये समासप्रकरणम् । चतुर्थे संक्षेपतस्तद्धितप्रकरणञ्च ॥

---

**No. 404. सारस्वतप्रदीपः.** By **विद्याभूषणः.** Substance, country-made paper, $14 \times 2\frac{1}{2}$ inches. Folia, 47. Lines, 4 on a page, Extent, 500 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamanasimha, Serapura, Paṇḍita Durgāsundara Kṛtiratna. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

प्रणम्य देवदेवाय बालानां सुखहेतवे ।
सारस्वतप्रदीपोऽयं पद्यैः संरच्यते मया ॥
अकारादिहकारान्ताः सिद्धवर्णाः प्रकीर्त्तिताः ।
एतदुर्वादिसंज्ञाय विधानार्थमिहोदितम् ॥

आद्यन्ताभ्यामिमे याभ्यां प्रत्याहारं जिघृक्षता ।
वक्ष्यमाणक्रमेणैव ते तथोक्ताः पुरातनैः ॥ इत्यादि ।

**End.** पुनर्णवा-सुभाति-वसुतः ।
नरीन्द्रत्येत वर्णर्षि-प्रख्यानं चन्द्रगोमिना ।
हरिनाथो विप्रयूना दौर्भागिनेय इत्यपि ॥
चावयूना स एव वाक्येनेत्याकृतिगणः स्मृतः ।

**Colophon.** इति श्रीविद्याभूषणविहृतौ सारस्वतप्रदीपे नामविहृतिर्द्वितीयः प्रकाशः ।

**विषयः ।** सारस्वतव्याकरणस्य टीका ।

---

**No. 405. सिद्धान्तदीपः.** Substance, country-made paper, 13 × 3 inches. Folia, 28. Lines, 6 on a page. Extent, 700 çlokas. Character, Bengali. Date, ? Place of deposit, Naihāṭi, District 24-Parganās, Paṇḍita Candrakānta Vidyāratna. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमः सरस्वत्यै ॥ अथ शब्दप्रमाणं निरूप्यते । तत्र भ्रमप्रमादविप्रलिप्सारहितेन पुरुषेण प्रयुक्तं वाक्यं प्रमाणम् । तत्र भ्रमोऽतत्त्वप्रकारकं ज्ञानम् । प्रमादो ऽनवधानता । विप्रलिप्सा प्रतारणेच्छा एभिः प्रयुक्तं वाक्यन्तु न प्रमाजनकं किन्त्वप्रमाजनकमेव ॥ इत्यादि ।

**End.** किन्तु सर्व्वनाम्नो व्यावर्त्तकत्वाभावादारोपस्योत्कटत्वेन साध्यवसानत्वं अध्यवसानमुत्कटरूपं अनयोर्लक्षणयोः सादृश्यसम्बन्धहेतुकत्वे गौणीलक्षणाहेतुकत्वं यथा गौर्व्वाहिको गौरयमित्यत्र । सम्बन्धान्तरहेतुकत्वे तु शुद्धलक्षणात्वं यथा आयुर्घृतमायुरिदमिदमिति ॥ * ॥

**Colophon.** समाप्तोऽयं सिद्धान्तदीपः ॥ * ॥ श्रीदुर्गा शरणम् ।

**विषयः ।** शब्दप्रमाणनिरूपणमुखेन शक्तिग्रहादिनिरूपणम् । शब्दबोधविशेष्यविशेषणभावकथनम् । नञर्थविचारः । एवकारव्युत्पत्तिविचारः । सति सप्तम्यर्थनिरूपणम् । क्त्वाप्रत्ययार्थविचारः । आख्यातवाच्यनिर्द्धारणवाक्यव्युत्पत्तिलक्षणादीनां निरूपणञ्च ।

---

**No. 406. सिद्धान्तरत्नम्. (सटीकम्)** By बलदेवविद्याविभूषणः. Substance, country-made paper, 12 × 4 inches. Folia, 128. Lines, 12 on a page. Extent, 3,000 çlokas. Character, Nāgara. Date, Samvat 1947. Place of deposit, Hātuā Mahārājā's Library. Appearance, fresh. Prose and verse. Generally correct.

**Beginning.** ॐ नमः कृष्णाय ।

वेदस्तथा स्मृतिगिरो यमचिन्त्यशक्तिं
सृष्टिस्थितिप्रलयकारणमामनन्ति ।
तं श्यामसुन्दरमविक्रियमात्ममूर्त्तिं
सर्व्वेश्वरं प्रणतिमात्रवशं भजामः ॥ इत्यादि ।

**टीकायाः ।** श्रीगणेशाय नमः । श्रीश्यामसुन्दरो जयति । ॐ नमः पूर्णप्रमितये गोविन्दाय । यस्य श्रीनन्नामपीयूषवर्षैराशीद्विश्वं भूततापं किलैतत् । इत्यादि ।

**End.** आनन्दतीर्थस्तुतमच्युतं मे
चैतन्यभास्वत्प्रभयातिफुल्लम् ।
चेतोऽरविन्दप्रियतामरन्दं
पिबत्यलिः सच्छवितत्त्ववादः ॥ ३९ ॥

**Colophon.** इति सिद्धान्तरत्नाख्ये भाष्यपीठके पुरुषार्थनिर्णयोऽष्टमः पादः ॥ ८ ॥

**टीकायाः ।** इति श्रीगोविन्दभाष्यपीठकटिप्पण्यामष्टमः पादो व्याख्यातः ॥ ८ ॥ लिख्यते राधामोहनव्रजवासिना मया मिते फाल्गुणमासे मासोत्तमे शुक्लपक्षे सोमवारे सम्पूर्णम् । सम्वत् ॥ १९४७ ॥

**विषयः ।** प्रथमपादे, सुखप्राप्तिदुःखपरिहारयोर्लोकप्रवृत्तिदर्शनात् केनोपायेन तौ निष्पद्येते इत्यादि निरूपणप्रसङ्गेन, प्रकृतिपुरुषविवेकादेव त्रिविधदुःखनिवृत्तिर्भवतीति श्रुति-स्मृति पातञ्जल-गौतमादिमतैः निर्णयः । अपिच केन प्रकारेण प्रकृतिपुरुषविवेको जायत इत्यस्यापि नानाविधविचारपूर्व्वकं स्थापनम् । अस्य च प्रथमपादस्य "परमपुरुषार्थोपायनिर्णय इति" नाम ॥ द्वितीयपादे च, भगवत्प्राप्तिविषये साक्षात् साधनीभूतयोर्ज्ञानभक्त्योरैश्वर्य्यमाधुर्य्यविषयत्वरूपेण द्वैविध्यनिर्व्वाचनम् । एवं के भक्त्या के चापि ज्ञानेन भगवन्तं प्राप्ता इत्यस्यापि विचारपूर्व्वकं निर्व्वाचनम् । भगवतश्चैश्वर्य्यादिनिरूपणञ्च । अस्य च द्वितीयपादस्य भगवदैश्वर्य्यादिनिर्णय इति नाम ॥ तृतीये च पादे, भगवान् सर्व्वेश्वरः जन्मादिविकारशून्य इत्यादावीश्वरतत्त्वनिरूपणम् । तस्य च श्रुत्यादिप्रमाणप्रदर्शनपूर्व्वको विचारः । एवं नानारूपमाश्रित्य भगवान् लोकपालनाय पृथिवीमवतीर्णः सन् केन केन नाम्ना भक्तैराहूत इत्यस्यापि निर्व्वाचनम् । एव"मेको ह वै नारायण आसीन्न ब्रह्मा न च शङ्कर" इत्यादिश्रुतिमाश्रित्य विष्णुपरमत्वसिद्धिश्च । अस्य च तृतीयपादस्य विष्णुपारम्यनिर्णय इति नाम ॥ चतुर्थे च पादे, ब्राह्मणो हि भगवतो मुखं, बाहुश्च क्षत्रियः, वैश्यो ऊरू, पादद्वयाच्च शूद्राः समजायन्त इत्यादिकथनम् । स एव भगवान् विष्णुः समस्तस्यास्य जगतः सृष्टिपालने संहारञ्च करोतीत्यादीनां श्रुत्यादिप्रमाणप्रदर्शनेन निरूपणम् । परब्रह्मणोऽपि सगुणत्वनिर्गुणत्वनिर्व्वाचनं कृत्वा वेदस्य नित्यत्वस्थापनञ्च । अस्य च चतुर्थपादस्य

"विष्णोः सर्व्ववेदवेद्यत्वनिर्णय इति" नाम ॥ पञ्चमपादे तु, जीवात्मनोऽज्ञानादेव प्रपञ्चस्य च प्रपञ्चस्य अद्वैतज्ञाननिवर्त्तनीयत्वमित्यादीनां विचारः । एवं द्वैतमतस्य प्रतिषेधादिविचार-पूर्व्वकाद्वैतज्ञानोपायनिर्णयश्च । अस्य च पादस्य "केवलाद्वैतनिरास" इति नाम । षष्ठपादे च, जीवात्मा हि सगुणत्वदशायामेव समस्तानि कर्म्मफलानि भुनक्ति । मोक्षे तु जाते जीवात्मनि गुणसंसर्गाभावात् अनन्तानन्दस्वभावप्राप्तिर्भवति । इत्यादीनां विचारमुखेन वेदादिप्रमाण-प्रदर्शनम् । एवं निराकारपक्षीयश्रुत्यादीनामन्यविषयव्याख्यया स्वपक्षोपयोगित्वस्थापनं प्रकारान्तरेण केवलाद्वैतनिरूपणञ्च । अस्य च पादस्य विधान्तरेण केवलाद्वैतनिरास इति नाम ॥ सप्तमा-ष्टमयोस्तु पादयोः, पुरुषार्थनिर्णय एव विषयः ॥ बलदेवविद्याविभूषणनामा कश्चिद्विपश्चिद्ब्रह्म-सूत्रेषु गोविन्दभाष्याभिधानं विवरणं निर्म्माय बहुलविषयत्वात् तस्य दीर्घाकारत्वं विचिन्त्य तदुपवेशाय स्वर्णपीठं निर्म्मातुमिच्छुः स एव सिद्धान्तरत्नाख्यं पीठकं निर्म्ममे इत्यस्य विशेष-विवरणमिति ।

---

**No. 407.** सिद्धान्तरत्नाङ्कुरः. By शिवरामः. Substance, palm-leaf, 17×1 inches. Folia, 161. Lines, 3 on a page. Extent, 3,500 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Thānā Rāṇīnagara, grāma Kuṇḍā, Paṇḍita Rāmacaraṇa Nyāyālaṇkāra. Appearance, tolerable. Prose. Correct.

**Beginning.** नमो गुरवे ।

प्रणम्य सर्व्वज्ञपदारविन्दं
गरुञ्च यत्नाच्छिवरामधीरः ।
कातन्त्रशेषाब्धिषु सन्निगूढं
सिद्धान्तरत्नाङ्कुरमातनोति ॥
क्व ममाणीयसी बुद्धिः श्रीपतेर्वचनं क्व वा ।
तथाप्येव प्रवृत्तस्य कारणं शङ्करस्तुतिः ॥
गोपीनाथादिविदुषां निबन्धाः सन्ति यद्यपि ।
तथापि मन्दबुद्धीनां बोधनाय ममोद्यमः ॥

ग्रन्थारम्भे विघ्नविघाताय कृतं चरितमस्कारं शिष्यशिक्षार्थमादौ निबध्नाति संसारेति । अस्यार्थः । चरिं नत्वा कातन्त्रपरिशिष्टं ब्रूम इत्यन्वयः । कातन्त्रशब्दः कौमारव्याकरणे रूढ़ः । परिशिष्यते यत् तत्परिशिष्टम् । इह्या-मादिकार्थम् । कातन्त्रस्य परिशिष्टमिति सम्बन्धविवक्षायां षष्ठ्याः

समासः । कातन्त्रावयवभूतं परिशिष्टमित्यर्थः । यद्यपि तत्तत्प्रयोगेषु हृत्या-
मुमादयः सिद्धा एव तथापि प्रकृतिप्रत्ययादिभिः प्रतिपदं नोक्तमिति
सूत्रादिना निरूप्यन्ते इति न दोषः । इत्यादि ।

**End.** अथ परे धनविहिते द्वितीयादयः कृदाख्यातसमासादिभिरविहिते प्रथमे-
त्युक्तम् । भवन्मते तदभावात् प्रथमा न प्राप्नोतीति परिशिष्टमाभित्याह ।
नाप्नोति । असिद्धेषु व्युत्पत्तिशून्येषु साधनानि उपाया युज्यन्ते न कदाचि-
न्निष्पन्नेषु इति भावः ॥ यथा दृष्टं तथा लिखितमिति ।

**Colophon.** (आदर्शेऽस्मिन् परिसमाप्तिसूचकं वाक्यं नोपलभ्यते)

**विषयः ।** श्रीपतिदत्तकृतकातन्त्रपरिशिष्टस्य व्याख्यानम् ।

---

**No. 408. सुपद्ममकरन्दः.** Substance, country-made paper, 16 × 3 inches. Folia, 23. Lines, 7 on a page. Extent, 600 çlokas, Character, Bengali. Date, ? Place of deposit, Kāṭhālpāḍā *viá* Naihāṭi, Paṇḍita Rāmatāraṇa Ṭhākura. Appearance, tolerable. Prose. Generally correct.

**Beginning.** अधातुविभक्त्यर्थवदित्यादि । भुवादयो धातवो विभक्तयः सुप्तिङश्च ।
प्रत्ययानान्तु सुपस्तिङेशः सर्व्वनामकार्य्यं प्रत्येव । न च धातुश्च विभक्तिश्च
इति समाहारद्वन्द्वगर्भो नञ्तत्पुरुषो बहुव्रीहिर्वा न पुनर्धातोर्विभक्ति-
रिति षष्ठीतत्पुरुषः । इत्यादि ।

**End.** नक्षत्राधिकरणे तृतीयासप्तम्यौ भवतः । पुष्येणेति । पुष्येण युक्तः कालः ।
युक्तः कालो नक्षत्रादित्यण् । लुबविशेषे तस्येवाणो लुप् । एवं मघासु कृत-
निर्व्वापः पितृभ्यो मां व्यसक्तयदिति भट्टिः लुबिति किं मघार्द्रं ध्रवः ।
नक्षत्रेति किं पञ्चालेषु वसति ॥ * ॥

**Colophon.** इति सुपद्ममकरन्दे षष्ठो बिन्दुः ॥

**विषयः ।** सुपद्मव्याकरणस्य विभक्तिप्रकरणस्य टीका ।

---

**No. 409. सुबन्तदुर्घटः.** Substance, country-made paper, 13 × 2½ inches. Folia, 17. Lines, 9 on a page. Extent, 450 çlokas. Character, Bengali. Date, ? Place of deposit, District Vākuḍā Viṣṇupura, Paṇḍita Rāmavallabha Bhaṭṭācāryya. Appearance, old. Prose. Generally correct.

Beginning. श्रीरामः । सर्व्वविषयव्यापकत्वात् सन्निपाते तु आदिप्रकरणे चिन्नार्थस्येति सूत्रं विधीयताम् । अत्र च लुक् सुपोऽव्ययादि क्रियतां तथा च करण-शुद्धिः स्यात् नामधातुत्वेन सुपोऽव्ययादिति चेन्न सन्निपातविहितस्यानित्य-त्वाच्च पौर्व्वापर्य्यसम्बन्धविहितत्वाच्च इति केचित् । तदसत् इत्यादेर्नित्य-दर्शनात् । इत्यादि ।

End. ननु औदित्यत्वात् ओदिति कथं न कृतं नकारस्य ओकारे ऐजेचोऽता इत्यनेनापि तत्सिद्धेः ॥ उ । जस्शसोर्लुकि पदान्तमकारलुकि च अकारस्य औत्स्यादिति सन्देहः स्यात् । जस्शसोर्लुगित्यस्य पूर्व्वानुवादित्वात् दुरादौ लोपात् ॥
न सर्वा टीक्यते सूत्रमूलं व्याख्यायते ।
उदिते मन्मतौ भानौ द्योततेति परं + + ॥ ० ॥ (?)

Colophon. इति सुबन्तस्य दुर्घटः समाप्तः ॥ ॐ नमः शिवाय ॥

विषयः । सुबन्तपादस्य व्याख्यानम् ।

---

**No. 410. सुरतदीपिका.** Substance, country-made paper, 18×3 inches. Folia, 5. Lines, 9 on a page. Extent, 150 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamanasiṁha Yaçodala, Paṇḍita Kālicandra Bhaṭṭācāryya. Appearance, old. Verse. Correct.

Beginning. ॐ नमो गणपतये । एतासामेव मधुना रतिरञ्जितानां वामानां चतस्रो वयोदशा षोडश्याः उक्ताश्च रतिरहस्ये । इत्यादि ।

End. एभिर्हि वश्यमोपायैः यः कामयति कामिनीम् ।
तस्य तुष्टा भवेन्नारी स्वात्मानञ्च समर्पयेत् ॥

Colophon. इति सुरतदीपिकायां चतुर्थोध्यायः ॥ ० ॥

विषयः । नारीणां दशावस्थादिनिरूपणपूर्व्वकेन तासां रमणोपायादिनिरूपणम् ।

---

**No. 411. सूर्य्यशतकम्.** By **मयूरशर्म्मा.** Substance, country-made paper, 13×3 inches. Folia, 12. Lines, 6 on a page. Extent, 200 çlokas. Character, Bengali. Date, ? Place of deposit, Kāṭhālpāḍā *viâ* Naihāṭi, Paṇḍita Rāmatāraṇa Ṭhākura. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ नमः श्रीसूर्य्याय ।

जम्भारातीभकुम्भोद्भवमिव दधतः सान्द्रसिन्दूररेणुं
रक्ताः सक्तैरिवौघैरुदयगिरितटीधातुधाराद्रवस्य ।
आयान्त्या तुल्यकालं कमलवनरुचे वारुणा वो विभूत्यै
भूयासुर्भासयन्तो भुवनमभिनवा भानवो भानवीयाः ॥ इत्यादि ।

**End.** देवः किं वान्धवः स्यात् प्रियसुहृदथवाचार्य्य आहोस्विदार्य्यो
रक्षा रत्नं दीपो गुरुरुत जनको जीवितं वीजमोजः ।
एवं निर्णीयते यः क इति च जगतां सर्व्वदा सर्व्वदासौ
सर्व्वाकारोपकारी दिशतु दशशताभीषुकेदुश्चिनत्वः ॥ (?)

**Colophon.** इति श्रीमयूरशर्म्मकृतं सूर्य्यशतकं समाप्तम् ।

**विषयः ।** श्रीसूर्य्यदेवस्य स्तवः ।

---

**No. 412. सूर्य्यशतकस्तोत्रटीका.** By **जगन्नाथशर्म्मा.** Substance, country-made paper, 12×1 inches. Folia, 28. Lines, 4 on a page. Extent, 600 çlokas. Character, Bengali. Date, ? Place of deposit, Dhākā, Paṇḍita Candrakānta Nyāyālaṇkāra. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ गणेशाय नमः ।

यस्मिन्नस्तमिते यतः सुवनुते(?)ऽप्युद्गच्छतीदं जग-
ज्जुष्टं चटविशिष्टदृष्टजनताभिः सर्व्वदायं भवेत् ।
रात्रौ रात्रिकरप्रभानिकरतोऽस्तःपद्मशोभीकरः
पद्मिन्या विरही प्रभाकरकरप्रोल्लास + + + भजे ॥
यं नत्वा लजरं वपुः सुरगणाः संप्रापुरेनःकुलै-
र्मुक्ता मुक्तिविरोधिभिर्मुनिगणाः संस्तूय दिव्यैः स्तवैः ।
तं नत्वा कवितापसूर्य्यशतकस्तोत्रस्य टीका जग-
न्नाथेनैव सुतन्यते हितकरी चेत्सिव विद्वत्प्रिया ॥
पुरा किल शरच्चन्द्रचण्डमण्डितकपालकपालितारकप्रशुद्दानवारितचेतकौप-
कलेवरो वाराणस्यामशेषशास्त्रविचारसकुलमवेदवेदान्तादिविद्याविशेषेण स-
मस्तीकृतात्मेवाधिभटजिताशेषप्रत्याख्यभाषोदर + + सुण्डमण्डनविद्वद्-
गणवैरी रीतिचयान्वितकवितात्याजितकविराजराजिकाव्यसुजातगर्व्व स्वपः-
सर्व्वीकृताशेषतपोधनो महामहोपाध्यायः श्रीमन्मयूरभट्टः पूर्व्वजन्मदुरदृष्ट-

हेतुकगलितकुष्ठशुष्ठो ग + + + स्तमो बान्धवस्तस्यावलम्बी भगवत्सूर्य्य-मन्दिरसङ्कीर्णद्वारावलम्बनाशक्तस्तत्पश्चादुपविष्टः पूर्व्वजन्मदुरदृष्टदुष्टकुष्ठरोगापनोदनेप्सुर्वान्धवाशीर्व्वादव्याजेन रश्मिराजिरथमण्डल × × × मेव भगवन्तं स्तौति. जम्भारातीभेति। अस्यार्थः। भानवीयाः सूर्य्यसम्बन्धिनो भानवो रश्मयः वो युष्माकं विभूत्यै विशेषसम्पत्तये भूयासुरित्यन्वयः। इत्यादि।

**End.** कौस्तुभपारिजातचन्द्रामृतप्रभृतयो न बान्धवा भ्रातरः पाणौ हस्ते पद्मं नच नरकरिपोर्विष्णोरुरःस्थलौ वक्षःस्थलं वासवेश्म वसति + + + + + + + वा स्वादधाना धारयन्ती ॥ ४२ ॥

**Colophon.** इति श्रीजगन्नाथशर्म्मविरचित श्रीसूर्य्यशतकस्तोत्रटीकायां रश्मिवर्णनं समाप्तं ॥

**विषयः।** मयूरभट्टकृतसूर्य्यशतकाभिधानस्तोत्रस्य रश्मिवर्णनाम्नं व्याख्यानम् ॥

---

**No 413.** स्तवमाला. By रघुनाथगोस्वामी. Substance, country-made paper, 12×4 inches. Folia, 44. Lines, 10 on a page. Extent, 1,400 çlokas. Character, Bengali. Date, ? Place of deposit, District Vãkuḍā Kucokol, Bābu Yogīndranātha Simha Deva. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ श्रीश्रीकृष्णचैतन्यचन्द्रो जयति ॥

गतिं दृष्ट्वा यस्य प्रमदगजवर्य्येऽखिलजना
मुखञ्च श्रीचन्द्रोपरि दधति थुत्कारनिवहम्।
स्वकान्त्या यः स्वर्णाचलमधरयेच्चौधु च वच-
स्तरङ्गैर्गौराङ्गो हृदय उदयन्मां मदयति ॥
अलङ्कृत्यात्मानं नवविविधरत्नैरिव बल-
द्विवर्णत्वस्तम्भास्फुटवचनकम्पाश्रुपुलकैः।
हसन् खिद्यन् नृत्यन्निति गिरिपतेर्निर्भरमुदा
पुरः श्रीगौराङ्ग इति ... ... ... ... ॥ इत्यादि ॥

**End.** यत्पादाम्बुजयुग्मविच्युतरजःसेवाप्रभावादहं
गान्धर्व्वासरसौ गिरीन्द्रनिकटे कष्टोऽपि नित्यं वसन्।
सत्प्रायो गणपालितो जितसुधाराधामुकुन्दाभिधुः
उद्गायामि प्रणौमि मां पुनरसौ श्रीमान् स कृपोऽवतु ॥

**Colophon.** 'इति श्रीमद्रघुनाथदासगोस्वामिना विरचिता स्तवमाला समाप्ता ॥ • ॥

**विषयः।** गौराङ्गस्तवः। गोवर्द्धनस्तवः। व्रजविलासस्तवः। राधाष्टकं। नन्दाष्टकं। मुकुन्दाष्टकं। चैतन्यचन्द्राष्टकञ्च।

---

**No. 414.** **स्मरणमङ्गलैकादशकम्.** By **रूपगोस्वामी.** Substance, yellow paper, 13 × 3½ inches. Folia, 6. Lines, 2½ on a page. Extent, 35 çlokas. Character, Bengali. Date, ? Place of deposit, Āgaḍtalā Vṛddhanagara, Paṇḍita Mineçvara Sārvvabhauma. Appearance, tolerable. Verse. Generally correct.

**Beginning.** श्रीराधाकृष्णाभ्यां नमः।

श्रीराधाप्राणबन्धोश्चरणकमलयोः केशशेषाद्यगम्या
या साध्या प्रेमसेवा व्रजचरितपरै गाढ़लौल्यैरलभ्या।
सा स्यात् प्राप्ता यया तां प्रथयितुमधुना मानसीमस्य सेवां
भाव्यां रागाध्वपान्यव्रजमनुचरितं नैत्यिकं तस्य नौमि॥ इत्यादि।

**End.** ताम्बूलैर्गन्धमाल्यै र्व्यजनहिमपयः-पादसम्वाहनाद्यैः
प्रेम्णा संसेव्यमानौ प्रणयिसहचरीसङ्घयेनाप्रशान्तौ। (?)
वाक्कायान्तेरिताभिर्निभृतरतिरसैः कुञ्जसुप्तालिसङ्गौ
राधाकृष्णौ निशायां सुकुसुमशयने प्राप्तनिद्रौ स्मरामि॥

**Colophon.** इति श्रीमद्रूपगोस्वामिना विरचितं श्रीराधाकृष्णयोरष्टकालिकश्लोकावलिस्मरणमङ्गलं समाप्तम्॥

**विषयः।** श्रीराधाकृष्णयोर्निशान्ताद्यष्टकालिकविहरणरूपमङ्गलस्मरणम्॥

---

**No. 415.** **स्मृतितत्त्वविनिर्णयः.** By **रामभद्रः.** Substance, country-made paper, 15½ × 3 inches. Folia, 163. Lines, 7 on a page, Extent, 4,000 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamanasiṁha, Sākhuyāri Kulapura, Paṇḍita Vrajakānta Smṛtipañcānana. Appearance, fresh. Prose and verse. Correct.

**Beginning.** ॐ नमो दुर्गायै।

विलोक्य बहुशास्त्राणि रामभद्रकृती स्मृतीः।
विदधाति यथैकत्र स्मृतितत्त्वविनिर्णयम्॥
प्रायशः सङ्कल्पानामेव कर्म्मणामारम्भकत्वादादौ स एव निरूप्यते। इत्यादि।

**End.** शूद्रस्य पार्वणश्राद्धमिति यदुक्तं तदापद्विषयकशाकभोजनविषयम् । आमान्न-विषयं वेति शूलपाणिः ॥ ० ॥ श्रीः ॥

**विषयः ।** नित्यनैमित्तिककर्म्मादीनां व्यवस्थादिः ।

---

**No. 416** स्मृतिसंक्षेपः. By नरोत्तमः. Substance, country-made paper, 16×3 inches. Folia, 14. Lines, 6 on a page. Extent, 1,100 çlokas. Character, Bengali. Date, ? Place of deposit, District Mayamanasiṁha, Nahātā, Paṇḍita Haracandra Vedāntavāgīça Appearance, tolerable. Prose. Correct.

**Beginning.** ॐ नमस्तारायै ।

अज्ञानतिमिरध्वंसि संसारार्णवतारकम् ।

मुक्तिप्रदं पदं यस्य नत्वा संदृश्यते मया ॥

चूर्णकेन सुबोधेन नरोत्तमद्विजेन वै ।

कथ्यते स्मृतिसंक्षेपं शृण्वन्तु द्विजसत्तमाः ॥

अथाशौचसंक्षेपः । इत्यादि ।

**End.** अथ षोड़शदानम् ।

भूम्यासनं जलं वस्त्रं प्रदीपोऽन्नं ततः परम् ।

ताम्बूलं छत्रगन्धश्च माल्यं फलमतःपरम् ।

शय्या च पादुका गावः काञ्चनं रजतन्तथा ॥ * ॥

**Colophon.** श्रीकालीपदे मम मतिरास्ताम् ॥ ० ॥

**विषयः ।** अशौचादिनिरूपणमुखेन सन्ध्यामरणव्यवस्था मुमुर्षुकृत्यादिनिरूपणम् । तथा षोड़शदानादिनिरूपणञ्च ।

---

**No. 417.** स्मृतिसर्व्वस्वम्. By नारायणः. Substance, country-made paper, 15×3 inches. Folia, 194. Lines, 7 on a page. Extent, 5,000 çlokas, Character, Bengali. Date, Sk. 1754. Place of deposit, District Vākuḍā Viṣṇupura, Paṇḍita Rāmānuja Bhaṭṭācāryya. Appearance, tolerable. Prose. Generally correct.

**Beginning.** श्री गणेशाय नमः ।

सर्व्वकर्म्मनिमित्तस्य मासस्यादौ निरूपणम् ।

चान्द्र-सौर-सावन-नाक्षत्रिकाश्चतुर्व्विधाः ॥

तत्र शुक्लप्रतिपदादिदर्शान्तो मुख्यश्चान्द्रः। कृष्णप्रतिपदादिपूर्णिमान्तो गौणः। प्रतिथ्यादि तत्तिथ्यन्तोऽन्यश्च। यथा कृष्णद्वितीयादिकृष्णद्वितीयान्तः। किन्त्वत्र पूर्व्वतिथिं त्यक्त्वा गणना प्रततिंशत्तिथ्यात्मकः स्यात्। तेन यदि शुक्ला पञ्चमी व्रततिथिस्तदा तां त्यक्त्वा शुक्लषष्ठीमादाय गणनया परशुक्लपञ्चमीपर्य्यन्तो मासस्तत्र प्रथममासिकः स्यादेवम्। इत्यादि।

**End.** दिवा सन्ध्यायाश्च नैव स्त्रीगमनम्। ततो मृज्जलाभ्यां शौचं मूत्रवत् कृत्वा स्नायादन्यतो तु न स्नानम्। नार्य्यास्तु न स्नानम्। मैथुनात् परं शौचात् पूर्व्वं मलमूत्रोत्सर्गो न करणीयः। उपवासं कृत्वा पराह्णे पुष्यर्क्षे श्वेतपुष्पायाः कण्टकारिकाया मूलमुत्पाद्य ऋतुस्नातायाश्च चतुर्थेऽहनि प्राक्शिरः संविष्टाया दक्षिणनासापुटे निशि उदकेन पिष्ट्वा दक्षिणाङ्गुष्ठानामिकाभ्यां गृहीत्वा पतिः।

ॐ औषधीस्नायमाणा सहमाना सरस्वती।
अस्याऽहं बृहत्याः पुत्रः पितुरिव नाम जनयेत्॥

इति मन्त्रं पठित्वा नस्यं दद्यादिति स सुपुत्रं जनयतीति। परञ्च पिप्पलीमरीचाद्रकनागकेशरचूर्णमाज्यमिश्रितं चिरं भुञ्जीतेति॥ रतिसम्बन्धिरात्रिवासः परिधाय वैधकर्म्म न करणीयमिति शिवम्॥ * ॥

गुरूणां पादपद्मानां कृपया समुपार्ज्जितम्।
नारायणीयं सर्व्वस्वं पुत्रपौत्रेषु तिष्ठतु॥
धीरा धीरवराः सुनिर्म्मलधियो वेदाविदाम्नानदाः (?)
काव्यव्याकरणाद्यशास्त्रनिपुणा विद्याकराः सत्वराः।
पुस्तीयं सुकृता मया मितधियाद्यार्थे भ्रमाद्दिष्यते-
ऽस्यां दुष्टं परिचिन्त्य चेदिति वदेत्तद्दूषणीयं तदा॥ * ॥

**Colophon.** इति स्मृतिसर्व्वस्वं समाप्तम्॥ * ॥ शकाब्दाः १७५४॥ ॐ रामः शरणम्।

**विषयः।** मासादिनिरूपणम्। मलमासे कर्त्तव्याकर्त्तव्यादिनिरूपणम्। अस्तादिनिरूपणम्। एकादशीद्वादश्यादितिथिकर्म्मव्यवस्थादिः। अष्टकामघायोदश्यादिव्यवस्था। आसन्नमृत्युकृत्यान्त्येष्टिक्रियादिनिरूपणम्। श्राद्धादिनिरूपणम्। अशौचादिव्यवस्था। द्रव्यशुद्ध्यादिनिरूपणम्। प्रायश्चित्तादिनिरूपणम्। विवाहादितिथिनक्षत्रादिनिरूपणम्। गर्भादियोगनिरूपणम्। विवाहादिनिरूपणम्। दशसंस्कारादिनिरूपणम्। अरिष्टध्वंसादियोगनिरूपणम्। दायभागव्यवस्थादिः। आह्निकादिनिरूपणम्। तर्पणादिनिरूपणम्। ऋतुभिगमनादिनिरूपणञ्चेति।

---

**No. 418.** **स्वप्रकाशरहस्यम्.** Substance, country made paper, 17½ × 3 inches. Folia, 12. Lines, 7 on a page. Extent, 500 çlokas. Character, Bengali. Date, ? Place of deposit, District Pharidpura, Parganā Idilpura, Post Office Pālangga grāma, Dhānukā, Paṇḍita Rajanīkānta Tarkaratna. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमः सरस्वत्यै । प्रभाकरस्त्वेवमाह । ज्ञानं नानुव्यवसायग्राह्यं परन्तु स्वयमेव स्वस्वाश्रयमात्मानञ्च गृह्णाति एवञ्च घटज्ञात्याद्याकारकव्यवसाय एव घटमहं जानामीत्याकारकः तस्य च मितिमात्रं ...... प्रत्यक्षरूपता घटादिरूपमेयांशे च क्वचित् प्रत्यक्षरूपता क्वचिदनुमित्यादिरूपता । अथैवमांशिकतया प्रत्यक्षत्वादीनां जातित्वानुपपत्तिरिति चेदिष्टमेवैतत् गुणगतजातिमनङ्गीकुर्व्वतामस्माकं । ननु तर्हि किमिदमंशे प्रत्यक्षत्वं न तावत् तद्दृत्तीन्द्रियसन्निकर्षजन्यत्वं तन्मते ज्ञाननिष्ठेन्द्रियसन्निकर्षस्य ज्ञानग्रहाजनकत्वात् ज्ञानांशे प्रत्यक्षत्वानुपपत्तेः नापि तद्विषयकज्ञानाजन्यत्वं ज्ञानानुमित्यादीनां ज्ञानविषयकपरामर्शजन्यतया ज्ञानांशे प्रत्यक्षरूपतानुपपत्तेः । न चेष्टापत्तिः मितिमात्रप्रकाशे सर्व्वमेव प्रत्यक्षमित्यादिग्रन्थविरोधात् . यच्च तत्वानुमेयज्ञानांशे प्रत्यक्षात्मकत्वं नोपपद्यत एव परन्तु स्वात्मकज्ञानांश एव तच्च नानुपपन्नं स्वस्य स्वविषयकज्ञानाजन्यत्वात् न च यत्र स्वविषयकपरामर्शात् स्वविशेष्यकानुमितिः तत्र का गतिरिति वाच्यं सामान्यलक्षणायाः प्रत्यासत्तित्वं मन्यमानानामस्माकं स्वपूर्व्वविषयकज्ञानस्यैवासम्भवात् ॥ इत्यादि ॥

**End.** अतो न्यायनये घटज्ञानवानहमित्यादिशब्दबोधे योग्यताज्ञानहेतुताकल्पनाधिक्यात् गौरवं अप्रकाशमते घटादिरूपपदार्थोपस्थितिरेव योग्यताज्ञानात्मिका तस्यैवात्मादिरूपैकपदार्थतादृशज्ञानादिरूपापरपदार्थवत्त्वरूपयोग्यताया नियमतोऽवगाहनात् । अतः पदार्थोपस्थितिहेतुतयै वा निर्व्वाहेण न तत्र योग्यताज्ञानस्य हेतुत्वान्तरकल्पनमित्येतदपि हेयमेव नैयायिकमते दर्शितबहुलाघवेन तादृशाल्पगौरवस्याकिञ्चित्करत्वादिति ॥

**Colophon.** इति स्वप्रकाशरहस्यम् ॥

**विषयः ।** प्रमात्वं स्वतो ग्राह्यमिति केचिदद्गन्ति गुरूणां मते ज्ञानस्य स्वप्रकाशकत्वात् तत् ज्ञानप्रामाण्यं तेनैव गृह्यते भट्टानां मते ज्ञानमतीन्द्रियं मुरारिमिश्राणां मते अनुव्यवसायेन ज्ञानस्य प्रामाण्यं गृह्यते इत्यादिविप्रतिपत्तिनिरासः ।

**No. 419.** स्वर्गसाधनम् . By रघुनन्दनभट्टाचार्य्यः. Substance, country-made paper, 18 x 5 inches. Folia, 48. Lines, 7 on a page. Extent, 1,200 çlokas. Character, Bengali. Date, ? Place of deposit, Naihāṭi, District 24-Parganās, Mahāmahopādhyāyā Paṇḍita Haraprasāda Çastri. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

क्रियाधिकारिणो वाच्यास्तथा चान्त्येष्टिपद्धतिः ।
अशौचनिर्णयोऽशौचद्वितीयाद्यक्रियापि च ॥
दानक्रिया वृषोत्सर्गं चाद्यमासादि षोड़श ।
प्रतिसंवत्सरश्राद्धं तथा पार्व्वणतीर्थकम् ॥
विशेषोऽपरपक्षस्याप्यमावास्यां व्रतस्य च ।
उच्यते चात्र संक्षेपात् रघुनन्दनशर्म्मणा ॥ अथाधिकारिणः । इत्यादि ॥

**End.** संक्रान्त्यां निशि सप्तम्यां रविशुक्रदिने तथा ।
श्राद्धे जन्मदिने चैव न कुर्य्यात् तिलतर्पणम् ॥
प्रतिप्रसवमाह ।
अयने विषुवे चैव संक्रान्त्यां ग्रहणेषु च ।
उपाकर्म्मवृषोत्सर्गे युगादौ व्रतवासरे ॥
रविशुक्रदिने चैव न दुष्येत् तिलतर्पणम् । तीर्थेऽपि न दोषः ।
तीर्थभावे तु कर्त्तव्यं तर्पणं यतिलोदकैः ।
अन्यथा कारयेत् यस्तु स विष्ठायां कृमिर्भवेत् ॥
आब्रह्म स्तम्बपर्य्यन्तं जगत् तृप्यत्विति क्रमात् ।
अञ्जलित्रितयं दद्यादिति संक्षेपतर्पणम् ॥

**Colophon.** इति रघुनन्दनभट्टाचार्य्यकृतः स्वर्गसाधनाख्यो ग्रन्थः सम्पूर्णः ॥०॥

**विषयः।** क्रियाधिकार्य्यन्त्येष्टिपद्धत्यादिक्रियाविषयाणां संक्षेपेण निरूपणम् ।

---

**No. 420.** हंसदूतटीका. By नृसिंहः. Substance, country-made paper, 12 x $2\frac{1}{2}$ inches. Folia, 17. Lines, 13 on a page. Extent, 650 çlokas. Character, Bengali. Date, ?. Place of deposit, District Vāṅkuḍā, Viṣṇupura, Paṇḍita Rāmavallabha Bhaṭṭācāryya. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमः श्रीकृष्णाय ।

योगीन्द्रैः शुकनारदप्रभृतिभिर्भक्त्याभियं भावितं
सानन्दं विधिशङ्करामरगणैर्वन्द्यं सदाभीष्टदम् ।
श्रीराधाललितादिभिः सुललितैर्भावैर्मुदाराधितं
श्रीगोविन्दपदारविन्दमशुभध्वान्ताय वन्दामहे ॥
वन्दे सनातनं नित्यं रूपञ्च स्वामिनं परम् ।
यो × × हंसदूताख्यं कृतं काव्यं मुदावहम् ॥
ध्यात्वा श्रीरूपचरणं मूढ़धीरप्यहो सदा ।
तद्व्याख्यानं वितनुते श्रीनृसिंहो यथामति ॥
किन्तु मर्षन्तु चापल्यं मम मूढ़स्य सूरयः ।
बालकानां सुबोधार्थं व्याख्यानं क्रियते मया ॥
यदत्र न्यूनमधिकं विरुद्धार्थञ्च यद्भवेत् ।
तत्सर्व्वं पण्डितैः शोध्यं शिरसैष कृतोऽञ्जलिः ॥
अथ परमभागवतः कविकुलधुरीणः श्रीरूपगोस्वामी अनवरतश्रीकृष्णचरितनिमग्नचित्तोऽपि काव्योपदेशेन हंसदूताख्यं प्रबन्धमनाय इष्टदेवतास्मरणरूपं मङ्गलमाचरति । दुकूलमित्यादि । कोऽपि अनिर्व्वचनीयः पदार्थः मे मम हृदि मनसि स्फुरतु आविर्भावं करोतु प्रार्थनायां लोट् । इत्यादि ।

**End.** अपिरतत्वात् शेषो नास्ति ।

**विषयः ।** श्रीरूपगोस्वामिप्रणीतस्य हंसदूताख्यकाव्यस्य व्याख्यानम् ।

---

No. 421. हरिकेलिकलावती . By कविशेखरः . Substance, country-made paper, 14 × 3 inches. Folia, 14. Lines, 5 on a page. Extent, 300 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Post Office Vaidyervāzār grāma, Kṛṣṇapurā, Paṇḍita Kālikṛṣṇa Vidyāvinoda. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ नमः श्रीकृष्णाय । ॐ नमः श्रीराधायै ।

प्रणिपत्य हरिं चरणाम्बुजभवप्रभुवासरकोटिभुतार्चितम् ।
हरिकेलिमहं कथयामि गुरोश्चरणाम्बुजयुग्मगतोऽबुधः ॥

अथ बालककैतवजातमहासुरसैनिकभारविषण्णमना ।
धृतधेनुतनूररविन्दभुवोऽगमदन्तिकमश्रुमुखी वसुधा ॥
अधिगम्य तदीरितमाधिकरं सुरसिद्धमुनिप्रकरेण पुनः ।
स च दुग्धपयोनिधितीरगतः प्रणिपत्य निवेदितवान् हरये ॥
प्रणयाच्च विधेरवनेश्च मुदः सुतताच यदोः परमः पुमान् ।
स्वयमाववतार निहन्तुमरीन् वसुदेवगृहे सह लाङ्गलिना ॥
भगवान् स ततो व्रजवासिगणे प्रतिपद्य स नन्दगृहं चलिता ।
मुकुलोदितमञ्जुलकेलिकुलैरथ गोकुलदेशमलङ्कृतवान् ॥
अवतंसितपुष्पितपल्लवकं यमुनातटिनीपतले निलिनम् ।
समवेक्ष्य ततो ह्यचिरेति सखी ललितोक्ति... मवदत् ॥ इत्यादि ॥

**End.**

इति कंसनृपं विनिपात्य रणोन्मदलाङ्गलिघातितबन्धुगणम् ।
पितरौ च ववन्द ननन्द यदूनथ नन्दमुखान् विससर्ज च सः ॥
उपसुप्रपदोत्तरसेनमसौ कृतवान् मथितारिपदे भगवान् ।
विजहार च तत्र पुरे रमणीरमणीयमहोत्सवरङ्गपरः ॥
इति ... धरणीरवतीर्य धुरं जगदेकधुरन्धर एष हरिः ।
... ... ... ... ... ... ... ... ... ... ... ... ...१ ॥
चरितस्य हरेरिदमेव परं शुकदेवमुखोदितमाधिवरम् ।
अधिगम्य महामुनिभागवताद्ग्रथितं शृणुत प्रणतेन मया ॥
इति × लघुचित्तजातमतोत्तरविंशतितोटकबन्धपदा ।
कविकेशरिणा हरिभक्तिमता हरिकेलिकलावलिका रचिता ॥

**Colophon.** इति हरिकेलिकलावल्यां कंसवधो नाम पञ्चमः सर्गः ॥

**विषयः ।** अस्मिन् चाशीतिमद्भुते पञ्चसर्गात्मके खण्डकाव्ये तत्रभवतो [illegible] श्रीहरे-चरितवर्णनम् । तत्र प्रथमसर्गे,– गोपवेशधरस्य गोष्ठं गतस्य भगवतो दर्शनाय रुचिरागतवती-प्रभृतीनां गोपरमणीनां संवादः । द्वितीयसर्गे,– गोष्ठस्थितेन भगवता गोविन्देन समं गोपीनां समागमवर्णनम् । तृतीयसर्गे,– रासविहारवर्णनम् । चतुर्थसर्गे,– भगवतः कंसपुरदर्शनम् । पञ्चमसर्गे,– कंसवधश्चेति ॥

---

**No. 422.** हरिनामार्थतत्त्वम् . By दासगोस्वामी . Substance, country-made paper, 12×5 inches. Folia, 4 Lines, 8 on a page. Extent, 65 çlokas. Character, Bengali. Date, ? Place of deposit, Āgartalā Vṛddhanagara, Tripurā, Paṇḍita Mineçvara Sārvvabhauma. Appearance, tolerable. Verse. Genefally oorrect.

**Beginning.** अथ महामन्त्रः ।
लोकानामुद्धरणार्थं हरिनाम प्रकाशयेत् ।
यस्माद्विमुच्यते लोको महापापं कलौ युगे ॥
हरेकृष्णपदद्वन्द्वं ... ... ... इत्यादि ।

**End.** हकारश्चात्मना ख्याता रे महाबाहुरेव च ।
हकारे महता देवी रेकारे च सुमेधसः ॥
... ... ... ... ... ... ... ... ।
हरिनामानुसेविनां कुलकोट्यास्तु संस्थितिः ॥

**Colophon.** इति श्रीदासगोस्वामिना विरचितं हरिनामार्थतत्त्वम् ॥

**विषयः ।** "हरे हरे" इति नाम्नो नानाप्रकारेण व्याख्यानम् ।

---

Addenda to No. 360.

( शिवताण्डवटीकायाः ) ।

ननु पुराणन्यायमीमांसाधर्म्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्म्मस्य च चतुर्द्दशेति ॥
स्मृत्युक्तचतुर्द्दशविद्यास्थानबहिर्भूतत्वात् तन्त्रमार्गस्य तदन्तर्गतशिवताण्डव-ग्रन्थस्यापि तथात्वात्तदन्तर्गतान्यर्थकृत्यन्तराण्यपि मदग्रहाभावान्न व्याख्येयानि । ननु ज्योतिषिकाणां ग्रहणमिव कौलिकानामपि निग्रहानुग्रहादिकं प्रत्यक्षं फलमस्ति श्रुतिमूलकत्वेऽनुपपन्नं यत् तदभ्यासस्य श्रुतिमूलत्वं प्रकटयति । तथा मन्वादिस्मृतीनामिव तन्त्राणामपि वेदमूलत्वं कृत्वा युक्तं व्याख्येयत्वमिति चेन्न । भाषामन्त्राणामपि प्रत्यक्षफलत्वेन श्रुतिमूलकत्वापत्तेः । न चेष्टापत्तिः गावो गोणीत्यादिभाषाणामशक्तिजापभ्रंशरूपत्वात् । अपभ्रंशरूपवर्णस्य वेदमध्यस्य ।

मन्त्रो हीनः स्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधादित्यनर्थहेतुत्वस्मरणात् ॥

तथाच तैत्तिरीयास्त्वष्टाहतपुत्र इत्यनुवाके इन्द्रस्य शत्रुं शातयितारं पुत्रमिच्छन् त्वष्टा स्वाहेन्द्रशत्रुर्वर्द्धस्वेति मन्त्रे इन्द्रशत्रुपदमन्तोदात्तं न प्रयुक्तवान् । किन्तु मौढ्यादाद्युदात्तमेव युक्तं तेनेन्द्र एव तत्पुत्रनाशकोऽभूत् इत्यामनन्ति । तस्माद्भाषामन्त्राणां शवरादिसिद्धवचस्त्वादेव वीर्य्यवत्त्वम् । न वेदमूलकत्वसिद्धिः । तेष्वपाठात् । किञ्च युक्तवर्णास्तत्सिद्धवचनात् भाषादिबीजभावेन संहता आवर्त्यमानाः सन्तस्तद्बीजार्थभूतां देवतामभिमुखीकुर्व्वन्तीति । अक्षरास्तु संख्यामन्त्रवाचिनः । न किञ्चित्तमभिमुखीकर्त्तुं शक्नुवन्ति । तेषां तद्वाचकत्वात् । तस्मादवैदिकत्वादवेदमूलत्वात् अनर्थकत्वाच्च न व्याख्येयान्यक्षयन्त्राणीति प्राप्ते ब्रूमः । न तावत्तन्त्राणां चतुर्द्दशविद्यास्थानबहिर्भूतत्वमस्ति पुराणपदेनैव भारतादीतिहासानामिव तेषामपि संग्रहात् । तेन तद्वदेवैषां श्रुतिमूलकत्वेन प्रामाण्यम् । सर्व्वेश्वरप्रणीतत्वेन भगवद्गीतादिवदभ्यर्हितत्वञ्च । नापि तद्गतानां मन्त्राणां पौराणमन्त्राणामिव वैदिकत्वमस्ति । शाबरादिविद्यानां प्रत्यक्षेण श्रुतिष्वेवोपलभ्यमानत्वात् । दर्शयन्ति चागमविदः श्रुतिष्वेव मन्त्राणामुद्धारम् । श्रीमन्तभागवते यन्त्ररामायणे चास्माभिरपि कृष्णषडक्षर-रामषडक्षरस्योद्धारो दर्शितो द्वादशवीष्वपि । तस्मात्तन्त्राणां वेदमूलत्वं तन्त्रत्यमन्त्राणां वैदिकत्वञ्च सिद्धम् । एवं भाषामन्त्राणां अक्षरानुपूर्व्व्या अवैदिकत्वेऽपि तदर्थानां वैदिकत्वादेव वीर्य्यवत्त्वम् । यथा व्यासादिप्रणीतानां विष्णुसहस्रनामस्तोत्रादीनाम् । अवैदिकस्य मन्त्रतन्त्रादेरदृष्टद्वारेण सर्व्वथाप्यर्थसाधकत्वसम्भवात् । सम्भवति च व्यासशवरादीनां संस्कृतभाषया देशभाषया वा वेदार्थग्रन्थनसामर्थ्यम् । तपःप्रभावनिबन्धनञ्च तद्ग्रथितायाः वर्णानुपूर्व्व्या अवैदिकत्वेऽपि तदर्थानां वैदिकत्वादेव वीर्य्यवत्त्वगतित्वत्समवार्थकारित्वम् । (?) तस्मात् सिद्धं पौराणमन्त्राणां भाषामन्त्राणाञ्च वैदिकत्वम् । आनुपूर्व्वीभेदाच्च सर्व्वेषां वर्णानामनुलोमप्रतिलोमजानाञ्च यथासम्भवमेषामुच्चारणेऽधिकार इति । न किञ्चिदवद्यम् । यत्तु अचलवाचिनो कान (?) किञ्चित्तत्त्वमभिधातुं सन्निधापयितुं वा समर्था इत्यनर्थकानि तन्मयानि यन्त्राणि इत्युक्तम् । तत्रोच्यते । यथा भूबीजाङ्कुरतद्रूपमप्यव्यक्तस्वविराड्रूपं (?) चतूरूपं

नष्टक्रमेव परापश्यन्ती मध्यमा वैखरीतिभेदेन (?) चतुर्व्विधाया वाचो वाच्यम् । यथा च तरौ स्कन्धशाखादिकं फलानि शब्दाटवस्यैवं विराजि तत्त्वं वियदादि जडरूपं देवतावर्गो जीववर्गश्च । तथाकारो वै सर्व्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवतीति विराड्वाचिनो-ऽकारस्य तत्त्ववाङ्मयत्वं श्रुतमिति यावान् वाच्यो व्यूहस्तावान् वाचक-व्यूहोऽपि वाग्विभूतिरूपः । तथाच श्रुतिः । यावद्ब्रह्मविष्ठितः तावती वागिति । एवं सति संख्यावाचिनोऽप्यङ्काः संख्येयं देवतादिसङ्घं वा देवता-वाचि यदवयवभूतवर्णसङ्घं वाभिदधति । दृष्टश्चैतल्लोकवेदयोर्यत्सङ्कानां संख्यावाचित्वम् । तथाद्यं भूमिर्यमावग्नयो वेदा वर्णा रसाः ऋषयो गजा वसवः दिशो रुद्रा आदित्या विश्वे मनवस्तिथयः कला इति सङ्केता-मेकचादि(?)संख्यावाचित्वं ज्योतिषे छन्दोविचित्यां च प्रसिद्धम् । तथा द्वितीय-मपि चर्त्तीविद्या द्वादशशतं दक्षिणा इत्नेन सप्तदक्षिणेन यजेतेत्यादौ संख्यया वेदगवादिकमेवाभिधीयते न लोकसुवर्णादि ।

एवमेकपादे विनिश्चित्य चीश्चतुर्भिर्वशीकुरु ।

पञ्च जित्वा विदित्वा षट् सप्त हित्वा सुखी भव ॥

एकायनोऽसौ द्विपदस्त्रिमूलश्चतुरसः पञ्चविधः षडात्मा ।

सप्तत्वगष्टविधो नवाक्षो दशच्छदी द्विख(?) गोष्ठ्यादिश्च इत्यादौ ॥

एकादिशब्दैर्बुद्धीश्वरादिसत्त्वाभिधानाच्च प्रसिद्धम् । न च संख्यायाः संख्येय-विशेष्यवाचित्वेनेयमर्थस्वलक्षणा दोषः । ईश्वरसंकेतप्रकृष्टार्थत्वात् । स्वं सङ्केत-प्रकृष्टार्थं नेयार्थमिति भण्यत इत्याकरे आधुनिकसंकेतप्रकृष्टार्थस्यैव नेयार्थ-त्वाभिधानात् । ईश्वरसङ्केतप्रकृष्टार्थत्वमेषां एकस्मै स्वाहा द्वाभ्यां स्वाहेति चतुर्थ्या संख्यावाचिनां शब्दानां देवतावाचित्वावगमादवयन्त्रप्रापकमन्त्र-लिङ्गाच्चावगम्यते । तथाहि श्रूयते ।

दातव्यं षड्विंशांश्चतुरः कल्पयन्तो ऋक्षाणि च दधत आद्वादशम् ।

यज्ञं विमाय कवयो मनीषा ऋक्सामाभ्यां रथं प्रवर्त्तयन्ति ॥

अस्यार्थः । कवयो यज्ञं विमा ऋक्सामाभ्यां रथं प्रवर्त्तयन्तीत्यन्वयः । कवय आन्तर्दर्शिनः । यज्ञं य इति कादि नव टादि नव पादि पञ्च याद्यष्टा-विंशत्यागमप्रसिद्धरीत्या य एक उच्यते । ज्ञ इति जकारञकारयोर्योगे च ज्ञ श्रुतत्वात् । शून्यवाची ञकारो ऽर्थकः तेन ज इत्यङ्कावुच्यन्ते । तानिमां नवसंख्या विमापविधेन रूपेण मीत्वा एकोऽष्टौ सप्त-द्वि-त्रि-षट्-पञ्च-चत्वारि, इत्येवं क्रमेण संख्या ऋक्सामाभ्यां । ऋक्सामञ्च ऋक्सामञ्चेति समाहार-

योरेकशेषः। स्वकोष्ठात् तृतीयया पंक्त्या तृतीयेन च कोष्ठेन सह एवं अङ्कयन्त्राख्यं उपासनायन्त्रं प्रवर्त्तयन्तीत्यर्थः। मनीषा मनीषया। षोडश-कोष्ठयन्त्रे यथैकाद्याङ्कौ प्रथमद्वितीयकोष्ठयोस्ते भवतस्तर्हि तृतीयपंक्तेस्तृतीय-चतुर्थकोष्ठयोर्वाञ्छार्थपूरणाचाङ्कौ लेख्यौ।

वाञ्छा तदर्थं स्फुटयति ... ... ... ... ... ... ... ... ... ... ... ... ...

... ... ... ... ... ... ... ... ... ... ... ... ... ... ...

... ... ... ... ... ... ... ... ... (पञ्चदशयन्त्रं) ... ... ...

......... तदेवं वर्णपदादीनामिवाङ्कानामभिधायकत्वात् ॐमित्येतदक्षर-मिदं सर्व्वमिति दर्शनेन वाच्यवाचकशब्दभेदाभिधानात्। उक्तरीत्या प्रत्यक्षं श्रुतिमूलकान्यङ्कयन्त्राण्यपि स्वाभिधेय-देवतासन्निधायकत्वात्, तान्यपि व्याख्येयानि। साधकैः सर्व्वसिद्धार्थमादरणीयानि चेति सिद्धमतो युक्तैवेयं प्रतिज्ञा यन्त्रावलीमङ्कमयीं व्याकुर्म्मश्च इति॥ इत्यादि।

## INDEX OF AUTHORS.


| नामानि । | पत्रे । |
|---|---|
| अच्युतचक्रवर्त्ती | १७३ |
| अनन्तभट्टः ( महामहोपाध्यायः ) | १६५ |
| अनन्तरामः | ९१ |
| अभिरामविद्यालङ्कारः | ३९२ |
| अर्जुनमिश्रः | २९८ |
| आनन्दवनः ( मुकुन्दवनशिष्यः ) | ३२३ |
| आनन्दानन्दनाथः ( सहजानन्दस्य पुत्रः ) | १४७ |
| कणादतर्कवागीशः | १३ |
| कमलाकरभट्टः ( रामकृष्णभट्टस्य पुत्रः, भट्टनारायणस्य पौत्रः ) | २०७ |
| कविकर्णपूरः | २९, ३३३ |
| कविकेशरी | ४१८ |
| कवितार्किकः | ८१ |
| कार्त्तिकेयसिद्धान्तः | २९२ |
| कालीशङ्करः | ३४१ |
| काशीनाथतर्कालङ्कारः | १५५, २३३, २३५ |
| काशीरामवाचस्पतिः | २५, ३९४ |
| काशीश्वरः | ३५६ |
| किशोरीमोहनगोस्वामी | ९६ |
| कुल्लूकभट्टः | ३२९ |
| कुबेरशर्म्मा | २६० |
| कृपारामः | ३४१ |
| कृष्णः | १३२ |
| कृष्णकान्तविद्यावागीशः | ३५४ |
| कृष्णकिशोरः | ३४१ |
| कृष्णचन्द्रः | ” |

| नामानि । | पत्रे । |
|---|---|
| कृष्णजीवनः | ३४१ |
| कृष्णदासः | ७१, २५३ |
| कृष्णदासगोस्वामी | २०४ |
| कृष्णदाससार्व्वभौमः | २२६ |
| कृष्णदेवस्मार्त्तवागीशः | २३८ |
| कृष्णमोहनः | ३२१ |
| कृष्णानन्दः | १८२ |
| केशवभट्टः | १५१ |
| गङ्गाहरिशर्म्मा | ९८ |
| गङ्गेशशर्म्मा | ४४ |
| गदसिंहः ( शिवसिंहस्य पुत्रः ) | २६० |
| गदाधरभट्टाचार्य्यः | २२५ |
| गुरुप्रसादन्यायभूषणः | ३७१ |
| गुरुप्रसादशर्म्मा | २७८ |
| गोपालः | १८३ |
| गोपालचक्रवर्त्ती | २५७ |
| गोपालन्यायपञ्चाननः | ७८ |
| गोपालपञ्चाननः ( आगमवागीशभट्टाचार्य्यस्य पौत्रः, हरिनाथभट्टाचार्य्यस्य पुत्रः ) | १४२ |
| गोपालभट्टः | ३६७ |
| गोपालमिश्रः | १८३ |
| गोपीकान्तः | ३०६ |
| गोपीनाथतर्काचार्य्यः | २२० |
| गोपीरमणतर्कपञ्चाननः | २६ |
| गोरक्षनाथः | ९३ |
| गोविन्दरामसिद्धान्तवागीशः | १८४ |
| गोविन्दाचार्य्यः | ३१५ |
| गोविन्दानन्दकविकङ्कणाचार्य्यः | १६६, २७४, ३१०, ३७८ |

| नामानि । | पत्रे । |
|---|---|
| गोविन्दानन्दशर्म्मा … … … … … … | १२३ |
| गोविन्दानन्दाचार्य्यः … … … … … … | २८४ |
| गौरीकान्तः … … … … … … | ३४१ |
| गौरीकान्तचक्रवर्त्ती … … … … … … | ४०३ |
| गौरीकान्तभट्टाचार्य्यः … … … … … … | १४९ |
| गौरीवरशर्म्मा … … … … … … | १८९ |
| चतुर्भुजभट्टाचार्य्यः … … … … … | १५, २५६ |
| चन्द्रशेखरवाचस्पतिः … … … … … … | १९४ |
| जगदीशतर्कालङ्कारः ( महामहोपाध्यायः ) … … … | २११ |
| जगदीशपञ्चाननः … … … … … | २९, २५५, २८५ |
| जगन्नाथगुप्तः ( कवीन्द्रः ) … … … … … | १९९ |
| जगन्नाथचक्रवर्त्ती … … … … … … | २७, १४६ |
| जगन्नाथदत्तः … … … … … … | १०३ |
| जगन्नाथशर्म्मा … … … … … | २७७, ४११ |
| जयतीर्थमुनिः … … … … … … | ३३४ |
| जीवगोस्वामी … … … … … … | ३१ |
| जुमरनन्दी … … … … … … | १९८ |
| ज्ञानानन्दपरमहंसः … … … … … … | ८१ |
| ज्ञानानन्दब्रह्मचारी … … … … … … | १४० |
| त्रिलोचनदासः ( माधवदासकवीन्द्रस्य पुत्रः ) … … … | ४९ |
| दनोकाचार्य्यः … … … … … … | २०० |
| दासगोस्वामी … … … … … | २७२, ४२० |
| दिगम्बरभट्टः … … … … … … | ३३० |
| दुर्गसिंहः … … … … … … | ३३, ५३, २१७ |
| धन्वन्तरिकरः … … … … … … | ३० |
| धोयीकविराजः … … … … … … | २२१ |
| नन्दकिशोरशर्म्मा … … … … … … | २९३ |
| नन्दकुमारगोस्वामी … … … … … … | ११० |

| नामानि । | | पत्रे । |
|---|---|---|
| नन्दपण्डितः | ... | २२३ |
| नन्दरामः | ... | ३५ |
| नन्दरामतर्कवागीशः | ... | १८५ |
| नरसिंहचक्रवर्त्ती | ... | १८६ |
| नरहरिः | ... | १७ |
| नरहरिसरकारः | ... | ८६ |
| नरोत्तमः | ... | ४१४ |
| नागभट्टः | ... | १६२ |
| नारायणः | ... | २५६, ४१४ |
| नारायणतर्काचार्य्यः | ... | १९१ |
| नारायणभट्टः ( रामेश्वरभट्टस्य पुत्रः ) | ... | १९० |
| नित्यनाथसिद्धः | ... | ३१४ |
| नृसिंहः | ... | ४१७ |
| नृसिंहकविराजः | ... | २६५ |
| न्यायपञ्चाननः ( विद्याविनोदात्मजः ) | ... | ३९३ |
| पद्मनाभदत्तः | ... | २२४ |
| परमानन्दचक्रवर्त्ती | ... | ५९ |
| पुरुषोत्तमदेवः | ... | १३८ |
| पुरुषोत्तमाचार्य्यः | ... | ३३५ |
| पूर्णानन्दपरमहंसः | ... | ५७, १३९ |
| प्रद्युम्नशर्म्मा | ... | ३८० |
| प्रेमेन्द्रन्यायरत्नः | ... | २११ |
| बलदेवविद्याभूषणः | ... | ४०६ |
| बालगोपालेन्दुः | ... | २०३ |
| ब्रह्मानन्दः ( परमहंसपरिव्राजकावधूतः ) | ... | १५३ |
| भवदेवभट्टः | ... | २३७, ४०१ |
| भार्गवरामः | ... | ३३२ |
| भीमः ( महामहोपाध्यायः ) | ... | ३७९ |

| नामानि । | पत्रे । |
|---|---|
| मथुरानाथचक्रवर्त्ती ... | ३०१ |
| मथुरानाथतर्कवागीशः ... | १६, १७, ३५७, ३५८ |
| मधुसूदनः ... | ३२६ |
| मयूरशर्म्मा ... | ४१० |
| महेशशर्म्मा ... | ६८, १९९, ३६६ |
| महेश्वरन्यायालङ्कारः ... | २२७ |
| माधवशर्म्मा ( बुधवाणकुलोद्भूतः, रघुनाथस्य पुत्रः, मतिनाथस्य कनिष्ठः, गोविन्दस्याग्रजश्च ) ... | २ |
| माधवाचार्य्यः ... | ३९४ |
| मालाङ्कः ... | ३४४ |
| मुकुन्दरामदैवज्ञः ... | ३६६ |
| मोहनचन्द्रविद्यावाचस्पतिः ... | १७२, २३८, ३६७ |
| यादवेन्द्रविद्याभूषणः ... | २४० |
| यादवेन्द्रशर्म्मा ... | ३०३ |
| रघुनन्दनन्यायप्रगल्भः ... | ६ |
| रघुनन्दनन्यायालङ्कारः ... | ९२ |
| रघुनन्दनभट्टाचार्य्यः ... | ४१७ |
| रघुनन्दनभट्टाचार्य्यः ( हरिहरभट्टाचार्य्यस्य पुत्रः ) | ९९, १५९, १७८, १९१, २२३ |
| रघुनन्दनवन्द्योपाध्यायः ... | २५१ |
| रघुनन्दनवैद्यः ... | २५२ |
| रघुनन्दनशिरोमणिः ... | ३५६ |
| रघुनाथगोस्वामी ... | ४१२ |
| रघुनाथचक्रवर्त्ती ... | ९, १८८ |
| रघुनाथतर्कवागीशः ( नपाडीयः ) ... | १८ |
| रघुनाथदासः ... | ९५ |
| रघुनाथदासगोस्वामी ... | ४१२ |
| रघुनाथभट्टः ... | ८४ |
| रघुनाथभट्टगोस्वामी ... | ६४ |

| नामानि । | पत्रे । |
|---|---|
| रघुनाथेन्द्रशिवयोगी ... ... ... ... ... ... | ५९ |
| रघुरामशिरोमणिः ( रघुमणिविद्याभूषणस्य छात्रः ) ... ... | १७४ |
| रत्ननाथभट्टाचार्य्यः ... ... ... ... ... ... | १०१ |
| रत्नेश्वरचक्रवर्त्ती ... ... ... ... ... ... | ६ |
| रत्नेश्वरन्यायालङ्कारः ... ... ... ... ... ... | ३११ |
| रमाकान्तः ... ... ... ... ... ... ... | ८६ |
| रमाकान्तचक्रवर्त्ती ... ... ... ... ... ... | ३२६ |
| रमाकान्तचक्रवर्त्ती ( मधुसूदनतर्कवागीशस्य पुत्रः ) ... ... | ४०५ |
| रमानाथचक्रवर्त्ती ... ... ... ... ... ... | ३५७ |
| रमानाथशर्म्मा ( वेदगर्भतर्काचार्य्यस्य पुत्रः ) ... ... ... | २०४ |
| रमापतिसिद्धान्तः ... ... ... ... ... ... | १५६ |
| रविचन्द्रः ... .. ... ... ... ... ... | ११ |
| राघवेन्द्रशर्म्मा ... ... ... ... ... | १३६, ३८५ |
| राधाकृष्णशर्म्मा ... ... ... ... ... ... | १२० |
| राधामोहनगोस्वामी ... ... ... ... ... | २३६ |
| रामकान्तः ... ... ... ... ... ... ... | १९७ |
| रामकिशोरचक्रवर्त्ती ... ... ... ... ... | १५ |
| रामकुमारन्यायभूषणः ( रामगतिवाचस्पतिपुत्रः ) ... ... ... | ७१ |
| रामकृष्णः ... ... ... ... ... ... ... | ३३८ |
| रामकृष्णभट्टः ... ... ... ... ... ... | ३२५ |
| रामकृष्णभट्टाचार्य्यः ... ... ... ... ... ... | १८० |
| रामगतिसेनः ... ... ... ... ... ... | ३०४ |
| रामगोपालः ... ... ... ... ... ... | ३४१ |
| रामगोपालकविः ... ... ... ... ... ... | ६२ |
| रामगोविन्दः ... ... ... ... ... ... | ७९ |
| रामगोविन्दशर्म्मा ( रामगोपालचक्रवर्त्तिनः पुत्रः ) ... ... | ३४९ |
| रामचन्द्रः ... ... ... ... ... ... ... | ३१९ |
| रामचन्द्रकविचक्रवर्त्ती ( माधवकविकण्ठाभरणस्य पुत्रः ) ... ... | ३०[illegible] |

| नामानि । | पत्रे । |
| --- | --- |
| रामचन्द्रद्विजः (?) | २५९ |
| रामचन्द्रन्यायालङ्कारः | ३१७ |
| रामचन्द्रवाचस्पतिः | १९० |
| रामचन्द्रविद्याभूषणः | २१८ |
| रामचन्द्रशर्म्मा ( काञ्जीरकुलसमुद्भवहरिहरात्मजः ) | ३९, ४०, ४१ |
| रामजयविप्रः | १५४ |
| रामदासचक्रवर्त्ती | ४५ |
| रामदुर्ल्लभशर्म्मा ( See Colophon of notice, no. 385.) | ३८८ |
| रामदेवद्विजः | ३६६ |
| रामनाथसिद्धान्तः | २१९ |
| रामभद्रः | ४१३ |
| रामभद्रसार्व्वभौमः | ३८६ |
| रामरत्नवन्द्योपाध्यायः | ६१ |
| रामरामभट्टाचार्य्यः | ३९० |
| रामवल्लभः | ३८७ |
| रामशरणः | ३५३ |
| रामहरिद्विजः | १४८ |
| रूपगोस्वामी | ३४, २६४, ३८२, ४१३ |
| रूपरामन्यायपञ्चाननः | ५३ |
| लोकनाथशर्म्मा | ११ |
| लौहित्यवरसेनः | १२१, २२९, २३१, २३२ |
| वररुचिः | ४७, १९३, २१४ |
| वराहमिश्रः | २२९ |
| वर्द्धमानोपाध्यायः | ८८, १६६ |
| वर्णिनारायणः | १७० |
| वल्लभः | ३२ |
| वल्लभदेवः | ३६४ |
| वाणसेनः | १६९ |

पत्रे ।

नि । ... ... ... ... ... ... १००
तिमिश्रः ... ... ... ... ... ... ३४१
र्ः ... ... ... ... ... ... ... १
न्द्रात्मजः ... ... ... ... ... ... २७५
रशर्म्मा pupil of जगद्वल्लभभट्टाचार्य्यः ... ... ... १३४
निधिः ... ... ... ... ... ... ... १६४
निवासः ... ... ... ... ... ... ... ४०५
भूषणः ... ... ... ... ... ... ... ३४२
रण्यतीर्थः ... ... ... ... ... ... ... ८६
वागीशभट्टाचार्य्यः ... ... ... ... ... १८७
रविन्दाचार्य्यः ... ... ... ... ... ... ४७
वागीशभट्टाचार्य्यः ( श्रीकान्तपण्डितस्य पुत्रः ) ... ... ६७
नगोस्वामी ... ... ... ... ... ... ... २४३
श्वरतर्काचार्य्यः ... ... ... ... ... ... २७२, ३६१
नाथचक्रवर्त्ती ... ... ... ... ... ... ४४१
श्वरः ... ... ... ... ... ... ... ३१३
वनदासः ... ... ... ... ... ... ... ३८६
रः ... ... ... ... ... ... ... ३५६
रः ( द्रविड़जः ) ... ... ... ... ... ... ४६
रशर्म्मा ... ... ... ... ... ... ... ३८८
रानन्दतीर्थः ... ... ... ... ... ... ... ३६४
राचार्य्यः ( गौडः ) ... ... ... ... ... १६२
शिवदाससेनः ( अनन्तसेनस्य पुत्रः ) ... ... ... ... ४०८
शिवरामः ... ... ... ... ... ... ... ३७
शिवरामतर्कपञ्चाननः ... ... ... ... ... ... १८१
वाचार्य्यः ... ... ... ... ३४, १५८, ३३५, ३५०
लपाणिः ... ... ... ... ... ... ... ३४१
यामसुन्दरः ... ... ... ... ... ... ... १४
यामसुन्दरभट्टाचार्य्यः ... ... ...

| नामानि । | पत्रे । |
|---|---|
| श्रीकण्ठतीर्थः | २६० |
| श्रीकण्ठशर्म्मा | ३७२ |
| श्रीकान्तदासः | ३४६ |
| श्रीकृष्णदासगोस्वामी | २०४ |
| श्रीकृष्णविद्यालङ्कारः | ५४ |
| श्रीनाथशर्म्मा | ३८१ |
| श्रीपतिचक्रवर्त्ती | ७ |
| श्रीहर्षदत्ती | २७७ |
| षष्ठीदासविशारदः ( जयकृष्णतर्कवागीशस्य पुत्रः) | १९९ |
| समीराचार्य्यः | ९३ |
| सर्व्वविद्यालङ्कारभट्टाचार्य्यः | ५२ |
| सार्व्वभौमभट्टाचार्य्यः | ९६ |
| सीतारामः | ३४१ |
| हरगोविन्दः | १३२ |
| हरानन्ददासकविचन्द्रः | १०७ |
| हरिकृष्णधीरः | १६५ |
| हरिचरणः ( रसिकशरणस्य शिष्यः ) | ९० |
| हरिनाथमिश्रः | १६४ |
| हरिरामः | ४९ |
| हलायुधमहाकविः | १९५ |
| हितहरिवंशगोस्वामी | ३८४ |
| हृदयानन्दविद्यालङ्कारः | १३७ |
| हेमकरः | २१३ |